करणमन्त्राणां वदन्तो मन्त्रप्रयोक्तुरेव मन्त्रजन्यशाब्दबोधं मन्यन्ते। तत्तु वयं न मृष्यामहे। किन्तु श्रोतुरेव मन्यामहे। शब्दोच्चारणस्य परं प्रत्येव शाब्दबोधजनकत्वस्वाभाव्यात्। न हि स्वस्मिन्नेव शाब्दबोधाय वाक्यप्रयोगोऽर्थवान् भवति। वक्तुस्तदर्थावबोधस्य शब्दप्रयोगात् पूर्वमवश्यंभावित्वात्। न ह्यबुद्धेऽर्थे वाक्यरचना युज्यते। सूत्रकारोऽपि[१], "अविशिष्टस्तु वाक्यार्थः (मी० १अ० २पा० ४०सू०)" इति लौकिकस्य वैदिकस्य च वाक्यस्यार्थावबोधं निर्विशेषं ब्रुवन् श्रोतुरेव शाब्दबोधमभ्युपगच्छति। अन्यथा, लोके श्रोतुः शाब्दबोधः मन्त्रेषु उच्चारयितुरिति वैरूप्यापत्तेः।

किञ्च, श्रोतुरेव मन्त्रतः शाब्दबोध इत्ययमर्थो मन्त्रगतशब्दैरेव स्पष्टं लभ्यते। प्रायेण हि सर्वे मन्त्राः सम्बोध्यविषयाः। तथाहि। इषे त्वोर्जे त्वेत्ययं मन्त्रः शाखाच्छेदने विनियुक्तः। तत्र साकाङ्क्षत्वात् त्वाशब्दस्य सम्बोध्यैकविषयत्वाद् द्वितीयायोगबलाच्च शाखे, छिनद्मीत्यध्याहार्यम्[२]। शाखे इति सम्बोधने प्रथमा, सम्बोधने चेति व्याकरणसूत्रविहिता। सम्बोधनं ज्ञापनम्। इषे त्वोर्जे त्वा छिनद्मि इति शाखां प्रति ज्ञाप्योऽर्थः। मन्त्रं प्रयुञ्जानो ज्ञापयति। तत् ज्ञात्वा शाखाऽनुजानाति। शाखाशब्देन तदभिमानिनी देवता अभेदेनोपचर्यते। ततश्च छेदनस्य तज्ज्ञापनस्य च तथान्वयो न विरुध्यते।

(१) मीमांसासूत्रकारो जैमिनिरित्यर्थः।

(२) त्वाशब्दस्य संबोध्यमानार्थवाचित्वात् शाखे—इति सम्बोधनपदाध्याहारः। त्वा—इति द्वितीयायोगबलात् छिनद्मीति क्रियाध्याहार इति भावः।



"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् (वे०२अ०१पा०५सू०)" इति बादरायणसूत्रे तद्भाष्यादौ च स्पष्टमेतत्। विष्णो हव्यꣳ रक्षस्वेत्यादौ सूपपादमेतत्[१]।

ननु देवताविग्रहचैतन्यादिकं नवमे[२] निराकृतम्। सत्यम्। निराकृतमुत्सूत्रं भाष्यकृता। न तु सूत्रकृता। प्रत्युत सूत्रकारस्य देवताविग्रहादिकमभिमतमेवेति विस्तरभयान्नात्र प्रपञ्च्यते। किञ्च, स्तोत्रशस्त्रीया ऋचो[३] देवतास्तुतिपराः स्तुत्यदेवताः प्रत्येव तद्गुणबोधकाः। लोके हि स्तोता गद्यपद्यादिभिः स्तुत्यं स्तौति। स्तुत्यश्च तत्कृतं चमत्कारं जानानः प्रसीदति। वैदिकेऽपि हि तथा भाव्यम्। न च स्तोत्रशस्त्राणि गातृशंसित्रोः स्तुत्यगुणबोधं स्वतः कुर्वन्ति। अग्न आयाहि,—इत्यादिसम्बोधनानुपपत्तेः। किञ्च सातत्येन शंसने न शंसितुरर्थबोधस्तदनुसन्धानस्फुरणासम्भवात्। स्तुत्यदेवतार्थावबोधवादे तु न विरुध्यते। किञ्च द्वादशे तृतीये, "मन्त्रान्तेन कर्मादिसन्निपातः स्यात् सर्वस्य वचनार्थत्वात् (मी०१२अ०३पा०५सू०)" इत्यस्मिन्नधिकरणे करणमन्त्रेषु तदन्तेन कर्मादिसन्निपातः सिद्धान्तितः। मन्त्रार्थस्मरणस्य प्रयोक्तृगतत्ववादे मन्त्रोच्चारणं ततोऽर्थस्मरणं ततः कर्मेति क्रमः। ततश्च तेन[४] व्यवधाने सिद्धान्तव्याकोपः। मन्त्रबोध्यदेवताशाब्दबोधवादे तु न काचिदनुपपत्तिः। यदुक्तमदृष्टार्थमेव स्यादिति। तदपि न। देवतागतशाब्दबोधमादायैव

(१) तत्र विष्ण्वादीनां देवतानामेव साक्षात् सम्बोध्यत्वादिति भावः।

(२) मीमांसादर्शनस्य नवमाध्यायस्य प्रथमपादे नवमसूत्रे।

(३) प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्। अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्।

(४) तेन अर्थस्मरणेन।

दृष्टार्थत्वसम्भवात् । जपानुमन्त्रणादिषु तु भवन्मतेऽप्यदृष्टत्वात् ।

न च श्रोतृदेवतागतार्थज्ञानस्य कथं दृष्टत्वं देवतानामप्रत्यक्षत्वात् इति वाच्यम् । तर्हि लोके परबुद्धेरप्रत्यक्षत्वात् वाक्यस्य परप्रत्यायकतयाऽदृष्टार्थत्वम् । अनुमानादिना परस्मिन्नर्थज्ञानस्य दृष्टत्वमितिचेल्लोकवद्वेदेऽपि तुल्यम् ।

इयांस्तु विशेषः । लोके वाक्यरचनायाः प्रयोक्त्रधीनत्वादर्थज्ञानं विना तदसम्भवात् प्रयोक्तुरर्थज्ञाननान्तरीयकमस्ति । न तु तात्पर्यविषयीभूतम् । मन्त्राणां त्वपौरुषेयत्वेन नित्यसिद्धतया तत्प्रयोक्तुरर्थज्ञानं नावश्यकम् । तथाचाव्युत्पन्नानामपि मन्त्रप्रयोगो न विरुध्यते । न हि वक्तुरर्थज्ञानं श्रोतुरर्थबोधे प्रयोजकम् । अव्युत्पन्नशुकसारिकाद्युदीरितगद्यपद्येभ्योव्युत्पन्नानां शाब्दबोधात् । ये तु भाष्यादिग्रन्था वक्तुरर्थज्ञानमिति ज्ञापयन्ति । तत्फलाभ्युदयहेतुत्वमात्रं न तु अधिकारितावच्छेदकमिति सर्वमनवद्यम् । यदि च नैवं मन्यसे चेदुपनीयमानस्य वटोरुपनीतमात्रस्य च वटोर्मन्त्रविधिः कथं सङ्गच्छेत । न हि तस्य मन्त्रार्थज्ञानं कथमपि सम्भाव्यते । इति दुस्तरापोहतरङ्गिणी ।

ननु स्वाध्यायोऽध्येतव्यइति विधौ वार्त्तिके अधीतेन स्वाध्यायेन फलवदर्थज्ञानं कुर्यादिति वाक्यार्थो मीमांसामाने चाधीतेन स्वाध्यायेन यच्छक्यं समीहितं तत्कुर्यादिति वाक्यार्थः ।[१] स सर्वोऽप्यार्थिकः । वास्तविकस्तु स्वाध्यायोऽध्येतव्य इत्यस्मिन् वाक्ये अध्ययनकरणिकायां भावनायां स्वाध्यायस्य कर्मत्वम् । तच्च योग्यतया

(१) समाधत्ते स इत्यादिना ।



प्राप्यत्वम् । तेनाध्ययनेन स्वाध्यायं प्राप्नुयादिति मुख्योऽर्थः । न च अनर्थकस्य प्राप्यत्वायोगाद्वाक्यान्तरेणार्थवत्त्वज्ञानादीदृशं वचनं युज्यते अधीतेन स्वाध्यायेन यकर्तुं शक्नुयात्तत्कुर्यादिति वाच्यम् । तां चतुर्भिरभ्रिमादत्ते । उरु प्रथस्वेति प्रथयति । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । इत्यादि श्रौतलैङ्गिकविनियोगाभ्यामर्थवत्त्वानिश्चये न तत्कल्पनं युक्तमिति सङ्क्षेपः ॥४१॥

अन्यान्यप्यधिकारितावच्छेदकान्याह ।

**शिखावानुपवीती च स्नाताचान्तोऽस्पृशन् परम् ।**
**आत्मानञ्चाशुचिद्रव्यं शूद्रादीनविलोकयन् ॥ ४२ ॥**

शिखावानिति । शिखित्वं बद्धशिखत्वस्याप्युपलक्षणम् । उपवीतित्वञ्च सव्यांसोपरिस्थितयज्ञोपवीतित्वम् ।

"विशिखो व्युपवीती च यत्करोति न तत्कृतम्" ।

इति स्मरणात् । स्नातत्वञ्च वह्निः सर्वशरीरजलसंयोगित्वम् । यद्यपि सप्तविधं स्नानं[१] स्मर्यते, तथापि वारुणमेव[२] सर्वकर्माङ्गम् ।

"स्नानानामपि सर्वेषां वारुणेन च मानवः ।
कर्तुमर्हन्ति कर्माणि विधिवत्सर्वदा द्विज" ॥

इति आग्नेयात् । इदं च कृतसन्ध्यादित्वस्याप्युपलक्षणम् ।

"सुस्नातः सम्यगाचान्तः कृतसन्ध्यादिकक्रियः ।

(१) मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च । वारुणं मानसञ्चैव सप्तस्नानं प्रकीर्त्तितमिति स्मृतौ सप्तविधं स्नानमुक्तम् ।

(२) वारुणं चावगाह्यं स्यादित्याद्युक्तेरवगाहनस्नानं वारुणम् ।

कामक्रोधविहीनश्च पाषण्डस्पर्शवर्जितः ।

जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते" ॥

इति हेमाद्रौ वाराहात् । कृतसन्ध्यत्वस्यानुदितहोमिभिन्नानामेव विशेषणम् । अनुदितहोमिनां * तु उदयात्प्रागेवोद्धरणं(१) कृत्वा होमोत्तरं सन्ध्यावन्दनमिति धर्मसूत्रात् । इममेव श्रीधरोऽप्येवमाह । उद्धृत्य सन्ध्यावन्दनं ततो होम इति देवजानीयपद्धतौ । युक्तं तु,

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" । इति ।

इत्यवचनेन शुचित्वसम्पादनद्वारा सर्वकर्माङ्गत्वात् प्रातःसन्ध्योत्तरं समुद्धरणं होमस्य । आचान्तशब्देन कृतद्विराचमनत्वमुच्यते । कर्मारम्भे द्विराचामेदिति स्मृतेः । परं आत्मानमशुचिद्रव्यं समार्जन्युपानहादीन् अस्पृशन् अधिकारी भवति । शूद्रादीन् । आदिना म्लेच्छादीनपि अविलोकयन्नधिकारी । एतच्च दिङ्मात्रं प्रदर्शितम् । तेन कृताहतवासः(२) परिधानप्राणायामसपत्नीकत्वादीन्युक्तानि भवन्ति ॥४२॥

तत्र सपत्नीकत्वमधिकारप्रयोजकमित्युक्तम् । तदर्थं पत्नीविशेषणान्याह ।

**स्वाध्यायमात्रं त्यक्त्वाऽन्ययजमानोक्तलक्षणाः ।**
**भार्याः सन्तीह यावत्यस्ताभिः सर्वाभिरन्वितः ॥ ४३ ॥**

* अनुदितहोमिना, — इति क० पुस्तके पाठः ।

(१) होमार्थमग्न्युद्धरणमित्यर्थः ।

(२) ईषद्धौतं नवं शुक्लं सदशं यन्न धारितम् । आहतं तद्विजानीयात् दैवे पित्र्ये च कर्मणि इत्युक्तलक्षणं वास आहतवासः ।



स्वाध्यायेति । स्वाध्यायव्यतिरिक्त-यावद्विशेषणविशेषितो यजमानस्तथैव लक्षणोपेताश्चावत्यः पत्न्यः ताभिः सर्वाभिः* सहितोऽधिकारी ॥४३॥

पक्षान्तरमाह ।

**यद्वा सवर्णया ज्येष्ठभार्ययैव समन्वितः ।**
**यद्वाऽऽधानादुपर्यूढकामपत्नीविवर्जितः ॥ ४४ ॥**

यद्वेति । सवर्णज्येष्ठभार्यया सहितोवाऽधिकारी न तु सर्वाभिः । सवर्णानामप्यनेकत्वे ज्येष्ठाया एव साहित्यं द्योतयितुं ज्येष्ठाग्रहणम् ।

तृतीयं पक्षमाह । यद्वेति । आधानानन्तरं ऊढा विवाहिता कामार्थं(१) या पत्नी, तया रहितोऽपि अधिकारीत्यर्थः ॥४४॥

अधिकारिनिरूपणसङ्गत्या पत्न्यधिकारे वैषम्यं वक्तुमुपक्रमते ।

**एवं सिद्धेऽधिकारित्वे† पत्न्याः किञ्चिन्निरूप्यते ।**
**तुल्य एवाधिकारः स्याद्दम्पत्योरुभयोर्मिथः ॥ ४५ ॥**

एवमिति । अधिकारित्वे अधिकारिस्वरूपे । [redacted] तु जातिः(२) ।

* सर्व्वाभिः, — इति नास्ति क० पुस्तके ।

† सिद्धेऽधिकारत्वे, — इति क० पुस्तके पाठः ।

(१) कामार्थं विवाहिता न धर्मार्थमित्यर्थः । कामार्थमेव या विवाहिता सैव कामपत्नीत्युच्यते ।

(२) अधिकारित्वे इत्यत्र स्वरूपार्थे स्वार्थे वा त्वप्रत्ययो न भावे इत्याशयः ।

स्वर्गकामो यजेतेत्यादिना कामनायां स्त्रीपुंसोरविशेषादुभयोरपि यागेष्वधिकाराद्दग्धाश्वरथन्यायेनान्योन्याकाङ्क्षयैव यागनिर्वृत्तेः प्रथमं तुल्याधिकारपक्षमाह । तुल्येति* । फलिसंस्कारभूतकर्मसु पत्न्या अपि कर्तृत्वेन तुल्याधिकार इत्यर्थः । तत्र वपने श्मश्रुणोऽपि चादित्यदर्शनाद्वपने नास्तीति(१) ॥४५॥

न च, अत एवाधनाः स्मृता इत्यस्या निर्धनत्वेन त्यागे नाधिकार इति । स्त्रीधनानि षड्वित्यादिस्मृत्योपेतद्रव्यत्वात्त्यागेऽपि तुल्याधिकारमाह ।

**कर्तृत्वं तु तयोस्तुल्यं द्रव्यत्यागे प्रचक्षते ।**
**यद्वा त्यागं पतिः कुर्यात् पत्नी तमनुमन्यते ॥ ४६ ॥**
**अधिकारेऽपि वैषम्यं प्रोक्तं शब्दानुसारिणा ।**

कर्तृत्वमिति । तुल्याधिकारपक्षेऽपि मतान्तरेण द्रव्यत्यागे वैलक्षण्यमाह । यद्वेति । त्यागं स्वस्वत्वपरिहारपूर्वकं परस्वत्वोत्पादनरूपं इन्द्रायेदं न ममेति, इन्द्रायेदं त्यजामीति रूपं वा, स्वामी कुर्यात् । पत्नी तमनुजानाति । सत्यपि साधनत्वे † स्वतन्त्रत्वाभावात्

* इत्थमेव पाठः सर्वत्र । तुल्यइति, — इति तु समीचीनम् । एवं परत्राप्यनेकत्र ।

† इत्थमेव पाठः सर्वत्र । सधनत्वे,— इति तु भवितुमुचितम् ।

(१) वपने पत्न्या अधिकारो नास्तीति भावः ।



निर्धनत्वे मन्त्रशब्दोच्चारणं यजमानस्यैवेति भावः(१) । इति शब्दानुसारिरुद्रदत्तमतम् * ॥४६॥

तुल्याधिकारमुक्त्वा सहाधिकारपक्षमाह ।

**प्राधान्येन स्वनिष्ठः सन् यजमानोऽधिकारवान् ॥ ४७ ॥**
**पत्नी तत्परतन्त्रा सत्यङ्गभूताऽधिकारिणी ।**
**तस्माद्विरुद्धधर्मत्वे पतिधर्मा बलाधिकाः ॥ ४८ ॥**

प्राधान्येति । स्वनिष्ठः स्वतन्त्रः । स च प्राधान्यत्वे हेतुः । परतन्त्रत्वञ्च गुणभूतत्वे । विचारप्रयोजनं, फलिसंस्कारा ये वाचनिका उभयोराम्नातास्त एव स्युः नेतरे । उक्तश्चायमर्थोऽपराह्णे व्रतोपायनीयमश्नीत इत्यस्मिन् सूत्रव्याख्यावसरे† कर्कोपाध्यायैः ॥४७॥

तस्मादिति । सहाधिकारादेव हेतोर्यत्रान्योन्यधर्मविरोधस्तत्र यजमानधर्मा एव भवेयुः । प्राधान्यात् ॥४८॥

ननु पक्षद्वयेऽपि कर्ममध्य एवान्यतरमृतौ अधिकारविघातात्तत्रैव संस्थापनीयमित्येकदेशिमतं दूषयति ।

**म्रियेतान्यतरः पत्योर्यदीष्ट्यादौ विसंस्थिते ।**
**अवशिष्टः प्रकुर्वीत तत्समाप्तिं यथोचिताम् ‡ ॥ ४९ ॥**

* शब्दानुसारीरुद्रदत्तमतम्.— इति क० पुस्तके पाठः । शब्दानुसारीन्द्रदत्तमतम्.— इति ख० पुस्तके ।

† इत्थमेव पाठः सर्वत्र । इत्येतत्सूत्रव्याख्यावसरे,— इति तु भवितुमुचितम् ।

‡ यथोचितम् — इति ग० पुस्तके पाठः ।

(१) पत्न्याः सधनत्वपक्षेऽपि भार्यापुत्रश्चेत्यादिवचनैस्तस्या अस्वातन्त्र्यस्योक्तत्वात् न ममेति त्यागो यजमानस्यैव न तस्याः । पत्न्या निर्धनत्वपक्षे तु सुतरामेव तथेत्यभिप्रायः ।

म्रियेतेति । यदीष्ट्यादौ । आदिपदात् पश्वादयः । विसंस्थिते अपरिसमाप्ते । पत्योर्दम्पत्योः । अन्यतरः जाया पतिर्वा । अवशिष्टयोरेकः । यथोचितान्तत्कर्मणोपयुक्तामपि । इदं प्रक्रान्तकर्मविषयम् । नाप्रक्रान्तविषयम् ॥४९॥

देशान्तरे यष्टृमृतौ अप्रक्रान्तमपि कञ्चित्कालं * कर्तव्यमित्याह ।

**देशान्तरमृतं यावद्दहेयुर्वैदिकाग्निभिः ।**
**तत्पत्नी कारयेत्तावदग्निहोत्राद्युपस्थितम् ॥ ५० ॥**

देशान्तरेति । उपस्थितं काले प्राप्तम् । आदिपदेन नित्येष्टिराग्रयणं च । पत्नीपदं यष्टुरप्युपलक्षणम् । पत्नीप्रवासस्य बहुवादिसम्मतत्वाभावात्पत्नीग्रहणम् ॥५०॥

एवमेव शास्त्रार्थं काम्येष्ववतारयति ।

**एवमिष्ट्यग्निहोत्रादि प्रक्रान्तं कर्म किञ्चन ।**
**मृते पत्यौ यथाशास्त्रं पत्नी परिसमापयेत् ॥ ५१ ॥**
**काम्यं कर्म प्रवृत्तः सन् वीतरागस्ततो यदि ।**
**कामाधिकारशून्योऽपि तदवश्यं समापयेत् ॥ ५२ ॥**

एवमिति । एवमवश्यं समापयेदित्युत्तरश्लोकेनान्वयः । प्रक्रान्तं प्रारब्धं किंचन नित्यं नैमित्तिकं च । मृते पत्यौ । अन्तरेति शेषः । पत्नी यजमानो वा । यथाशास्त्रं स्रुग्दण्डस्याधस्तात्समिधधारणादिशास्त्रमनतिक्रम्य यथा समापयेत् तथा काम्यमपि प्रारब्धं तदन्तरा

* किञ्चित्कालमित्यादर्शपुस्तकपाठः ।



इष्ट्यादिरूपकामनायां सिद्धायां तदुत्तरं कामनाविरहेणाधिकारशून्येनापि प्रारब्धं समापनीयमेव । न त्वन्तरा त्यागः । शिष्टविगर्हणात् । दोषश्रवणाच्च । यद्वा, पूर्ववचनमपि काम्यपरतयोनेयम् ॥५१॥ ॥५२॥

तुल्याधिकारसहाधिकारपक्षोपष्टम्भं पक्षद्वयमाह ।

**काम्यत्वे दम्पती कामं कामयेते पृथक् पृथक् ।**
**यद्वा कामयते स्वामी नावश्यं कामना * स्त्रियाः ॥ ५३ ॥**

काम्यत्वेति । कर्मण इति शेषः । कामनाविषयत्वे सति उभयोरपि युगपदायुष्ट्यादिकामनायामेक एव काम्येष्ट्यादिप्रयोगः कालभेदे तु पृथगिति । अन्यतराधिकारे तु उभयोरप्यधिकारोऽनुपदं वक्ष्यते । द्वितीयं पक्षमाह । सहाधिकारपक्षे यष्टुरेव काम्याधिकारः । कामनाः स्त्रिया अवश्यं निश्चयेन न सन्तीति शेषः । तस्याः पारतन्त्र्यादिति भावः ॥५३॥

नित्यकर्मण्याहिताग्नेर्यथाऽधिकारं विनियोग इति षाष्ठसिद्धान्तेनाह(१) ।

**यस्तिरोहितशक्तिस्तस्याधिकारो न नश्यति ।**
**कर्मस्ववश्यकार्येषु नष्टशक्तेस्तु नश्यति ॥ ५४ ॥**

* आदर्शपुस्तकत्रयेऽप्येकवचनान्तपाठदर्शनात् तथैव निवेशितः । टीकाकारमते तु कामनाः, — इति बहुवचनान्तः पाठः ।

(१) मीमांसादर्शनस्य षष्ठाध्यायस्य तृतीयपादगतसिद्धान्तमाश्रित्याहेत्यर्थः ।

पश्यतीति । अवश्यकार्येषु नित्यनैमित्तिकेष्विति यावत् । कर्मसु । आधानानन्तरं चक्षुर्नाशादिना तिरोहिताऽन्तरिता शक्तिः सामर्थ्यमाज्यावलोकनादिरूपं यस्य तादृशस्य पुरुषस्याधिकारो न नश्यति । नित्येषु यावच्छक्तिन्यायात् । यदा तु नित्येष्वपि आरम्भसामर्थ्यं नास्ति तदानीमधिकारलोप इत्याह । नष्टशक्तेरिति ॥५४॥

ननु नित्येषु केषु चित् यावज्जीवानुष्ठेयत्वेनोपदेशेऽपि जीर्णस्य कर्मण्यनधिकार इत्येकदेशिमतं दर्शयितुं सम्मतिं दर्शयति ।

**यावज्जीवादिसंकल्पकारिणः शक्तिलोपने ।**
**अधिकारस्तदन्तः स्यादिति शालीकिनाथधीः* ॥५५॥**

यावदिति । तदन्तः सामर्थ्यपर्यन्तः । मनुष्याणामेवाधिकारः आरम्भसामर्थ्यादिति प्राक् प्रयुक्तहेतोरविशिष्टत्वात् । शालीकिनाथो ऋषिः ॥५५॥

पूर्वोक्तमेकदेशिमतं दूषयितुमाह ।

**यावज्जीवादिसंकल्पादूर्द्ध्वं चेच्छक्तिलोपनम्† ।**
**तथापि नाधिकारस्य हानिर्वार्त्तिकदर्शनात् ॥५६॥**

यावदिति । असामर्थ्येऽपि यथा कथञ्चित् नित्यं कर्त्तव्यमेवेति भावः ॥५६॥

* शालीकिनायधी, — इति क॰ पुस्तके पाठः । शालीकनाथधीः, — इति ग॰ पुस्तके पाठः ।

† लोपने, — इति क॰; ख॰ पुस्तकयोः पाठः ।



एतदर्थं याज्ञिकसम्मतिं दर्शयति ।

**प्रायेण याज्ञिकाचारोऽप्येवमेवोपलभ्यते ।**
**न हि संकल्पितं कालमसंपूर्य त्यजन्ति ते ॥५७॥**

प्रायेणेति । आचारस्यापि धर्मे श्रुत्यन्तरितप्रामाण्यत्वेन निश्चयादाचारग्रहणम् । आचारमेव विशदयति । न हीति । यावज्जीवादिरूपं कालं असम्पूर्य सम्पूर्णमकृत्वा न त्यजन्ति ॥५७॥

ननु यावज्जीवादिसङ्कल्पे मानाभावात्प्रत्यहं यथाकालं नित्यानां प्रयोगसङ्कल्पाश्रयणेनैव निर्वाहाय* यावच्छक्ति नित्यानां करणमिति पूर्वपक्षमाशङ्क्य निराकरोति ।

**यावज्जीवादिसंकल्पो न्यायप्राप्तो न यद्यपि ।**
**तथापि वचनात्प्राप्तस्तस्मात् कर्त्तुं स युज्यते ॥५८॥**

यावदिति ॥५८॥

पक्षद्वयमप्युपसंहरति ।

**एवंकृते तु संकल्पे ततः शक्तिविलोपने† ।**
**युक्ता दर्शनभेदेनाचाधिकारास्तिनास्तिता ॥५९॥**

एवमिति । एवं यावज्जीवादिरूपे । दर्शनभेदेन शालीकिवार्त्तिक-

* इत्थमेव पाठः सर्व्वत्र । निर्वाहात् — इति तु भवितुमुचितम् ।

† शक्तेर्विलोपने, — इति ग॰ पुस्तके पाठः ।

शास्त्रभेदेन । अधिकारस्य अस्तिता नास्तिता च ज्ञेया[१] । द्वन्द्वान्ते श्रूयमाणस्य तल्प्रत्ययस्य प्रत्येकमभिसम्बन्धः ॥५९॥

अशक्त्याऽभावप्रसङ्गादाह ।

**अशक्त्या याजमानं चेत्पत्नीकर्म च लुप्यते ।**
**न तावता क्रतुभ्रेषः स्यादध्वर्युसम्भवतः ॥ ६० ॥**

अशक्त्येति । याजमानं पुरुषार्थरूपम् । न क्रत्वङ्गम् । पत्नीकर्मापि तादृशं योक्त्रबन्धनादिरूपम् । क्रत्वर्थन्तु समाख्ययाऽध्वर्युः करोति ॥६०॥

ननु त्यागस्य याजमानत्वेन तदशक्त्या पूर्वन्यायेन त्यागलोप इति पूर्वपक्षं दूषयितुमाह* ।

**त्यागन्तु सर्वथा कुर्यात्तथाप्यन्यतरस्तयोः ।**
**उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत् ॥ ६१ ॥**

त्यागमिति । त्यागं सर्वथा स्वयमेव, पत्न्यपि पूर्वोक्तपक्षाश्रयणेन कुर्यात् । सर्वथाशब्दस्तु अशक्तावुपाभीतोपसर्पणाशक्तावासनमथ इति कात्यायनोक्तप्रकारार्थः । अतस्त्वाशक्तौ त्वाह । तथेति । यजमानस्य तथापि त्यागेऽप्यशक्तौ स्वामित्वाविशेषेण तयोर्दम्पत्योरन्यतरः

* दर्शयितुमाह,—इत्यादर्शपुस्तकपाठो न समीचीनः ।

(१) तथाच प्राचीनकात्यायनमते यावज्जीवादिसंकल्पकरणानन्तरं शक्तिलोपे नास्त्येवाधिकारः । वार्त्तिकमते त्वस्तीति यथायोगं योजनम् ।



एकः पत्नी यष्टा वा । उभयोरसामर्थ्ये तु आध्वर्यवे नियुक्तः कश्चन अस्वाम्यपि अध्वर्युः त्यागे अधिकरोति ॥६१॥

अथेदं चिन्त्यते बहुभार्यस्याच सर्वासामधिकार इति प्रागुक्तप्रथमपक्षे कनिष्ठाया अङ्गवैकल्ये आज्यावेक्षणासम्भवात् कथमधिकार इति पूर्वपक्षं दूषयति ।

**सर्वे स्वस्वक्रियाशक्तिमात्रेणैवाधिकारिणः ।**
**तस्मादनेकभार्यस्य ज्येष्ठा चक्षुष्मती यदि ॥ ६२ ॥**
**कनिष्ठाऽन्धाऽपि नित्येष्टिहोमादावधिकारिणी ।**
**क्रत्वर्थाज्येक्षणादीनि ज्येष्ठैव कुरुते यतः ॥ ६३ ॥**

सर्वे इति । सर्वे स्वामिपत्नीऋत्विजः स्वस्वकर्मसामर्थ्येनैवाधिकारिणः । कर्मसामर्थ्यञ्च ऋत्विजां समाख्यया वचनयोगाच्च । पत्योस्तु फलयोगाद्वचनाच्च । तदुक्तं, कर्मणि पुरुषाणां प्रधानं स्वामी फलयोगात्* । पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात् । वचनविरोधाभ्यामन्य इति । तत्राज्यावेक्षणस्य केवलक्रत्वर्थत्ववादिमतेनोत्तरमाह । तस्मादिति । यस्मात्सामर्थ्यमधिकारकं, तस्मात् अन्धाऽपि कनिष्ठा पत्नी संस्कारकर्मसु त्यागे चाधिकारिणीति भावः ॥६२॥

न चावेक्षणे चक्षुर्वैकल्यादसम्भवेन नाधिकार इत्यत आह । क्रत्वर्थेति । शास्त्रार्थस्य† निष्पन्नत्वादिति भावः ॥६३॥

आज्यावेक्षणस्य पुरुषार्थतावादिमतेनाह ।

* स्वामिफलयोगात्, – इत्यादर्शपुस्तकपाठो न समीचीनः ।

† शास्त्रार्थस्य, – इत्यादर्शपुस्तकपाठो न समीचीनः ।

**अन्ये त्वाज्येक्षणादीनि* सुप्रजास्त्वफलान्वयात्† ।**
**सर्वाः कुर्युरिति प्राहुः तस्मादन्धां त्यजन्ति ते ॥६४॥**

अन्ये त्विति । श्रूयते हि सुप्रजास्त्वादिरूपं फलं तच्छ्रवणाच्च पुरुषार्थताऽऽज्यावेक्षणस्य । तच्च सर्वासामपि नान्धानाम् ॥६४॥

अधिकारितावियातकनिरूपणेन तदवच्छेदकान्याह ।

**परीष्टिदोषसम्प्राप्तौ न यष्टव्यं कदाचन ।**
**स च दोषः प्रपञ्चेन सम्यगत्राभिधीयते ॥ ६५ ॥**

परीष्टेति । न यष्टव्यम्, आधानादिकमपि न कुर्यादित्यर्थः । शेषं स्पष्टम् ॥६५॥

दोषलक्षणान्याह ।

**दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसङ्ग्रहम् ।**
**अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् ॥ ६६ ॥**

दर्शेष्टिमिति । एतन्निषेधापालनमेव परिवेत्तृत्वमिति‡ भावः । अत्र प्रत्येकं निमित्तानि न तु समुच्चयः । तद्यथा । कृतदर्शजनकज्येष्ठौरससोदरस्यैव दर्शेऽधिकार इति यथातथमूह्यम् । तथा च कृताधानजनकसोदरवत्त्वेऽपि तयोरकृतपौर्णमासादिकयोः सतोरेतस्य पौर्णमासादौ नाधिकार इति भावः । निमित्तेन पुनराधानो-

* अन्ये त्वाज्येक्षणादीनां – इति म॰ पुस्तके पाठः ।

† इत्थमेव पाठः सर्व्वत्र । सुप्रजस्त्वफलान्वयात्, – इति तु भवितुमुचितम् । एवं परत्राप्यूह्यम् ।

‡ इत्थमेव पाठः सर्व्वत्र । परिवेत्तृत्वमिति, – इति तु भवितुमुचितम् ।



त्तरमकृतदर्शादित्वेऽपि तयोर्नातिप्रसङ्ग इति सूचयितुं प्रथमे इति(१) ॥६६॥

**न कुर्याज्जनके ज्येष्ठे सोदरे वाऽप्यकुर्वति ।**
**क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे ॥ ६७ ॥**
**नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि चौरसे ।**
**पङ्ग्वन्धमूकवधिरपतितोन्माददूषणे ॥ ६८ ॥**

अत्र सोदर इति औरसः सोदरो ग्राह्यः । तथा च वक्ष्यते । क्षेत्रजादाविति । क्षेत्रजादौ सोदरे इत्यनेनान्वयः । आदिशब्देन कन्यावस्थायां जातः ॥६७॥

सोदरस्यैवौरसस्य भिन्नोदरत्वेऽपि विघातकत्वमाशङ्क्य परिहरति । भिन्नेति । चकारः समुच्चये ।

अथ तयोराधानादिषु अधिकारित्वे सत्येव दोषो नान्यथेत्याह ।

पङ्ग्विति । पङ्गुर्निरङ्घ्रिः । एकेन द्वाभ्यां वा । एवं सर्वत्र । अन्धो नेत्रहीनः । मूको वाक्हीनः । वधिरोऽश्रोत्रः । पतितः पातित्यापादककर्मकारी । उन्मादोऽपस्मारः, तदेव दूषणं यस्य ॥६८॥

**संन्यस्ते छिन्नहस्तादौ यद्वा षण्डादिदूषणे ।**
**जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम् ॥ ६९ ॥**

(१) जनकादिभिर्दर्शादौ कृते सत्येव दर्शादावधिकारो न लभ्यते । एतच्च दर्शादेः प्रथमानुष्ठाने बोध्यम् । यदि तु जनकादीनां पुनराधाननिमित्तमुपनिपतति, तदा तेषां पुनराधानोत्तरं दर्शादिकरणात् पूर्व्वमपि दर्शाद्यनुष्ठानं न विरुध्यते इति भावः ।

संन्यस्तेति । संन्यस्ते आधानादूर्ध्वमेव प्रव्रजिते । छिन्नहस्तादौ । आदिशब्दात् नासिकादिः । यद्वा । प्रकारान्तरेण समुच्चयनिवारणार्थं वाग्रहणम् । तेन प्रत्येकं निमित्तता । षण्ढः प्रसिद्धः । अष्टविधनपुंसकग्रहणार्थं आदिपदम् । ज्येष्ठे सोदरे औरससोदरे एवं विधे सति इतरः पुत्रः कनिष्ठबन्धुर्वा पूर्वोक्तं सर्वं कुर्यादित्यर्थः ॥६९॥

**तयोरस्त्वनधिकारित्वान्नैतस्याधिक्रियाक्षतिः ।**
**ज्येष्ठे श्रद्धाविहीने सत्याधेयं तदनुज्ञया ॥ ७० ॥**

तयोरिति । तयोस्त्वनधिकारादिति । अथ सोदरस्य विशेषमाह । ज्येष्ठ इति । ज्येष्ठे पूर्वोक्तदोषरहिते ज्येष्ठे सोदरे श्रद्धाविहीने सति कामतोऽकारिणि, आज्ञां प्राप्यैवाधिकारः ॥७०॥

तादृशे(१) पितरि तु अनुज्ञयाऽपि नाधिकार इत्याह ।

**पितुः सत्यप्यनुज्ञाने नादधीत कदाचन ।**
**पितर्यनाहिताग्नावप्यादधीताथ वा सुतः ॥ ७१ ॥**
**अग्निहोत्रञ्च जुहुयादिति लौगाक्षिकारिका ।**

पितुरिति । लौगाक्षिमतमुपन्यस्यति । पितरीति । अनुज्ञयेत्यध्याहारः ।

“अनुज्ञातस्तु पित्रा तु आधानं सर्वदा भवेत्” । इति ।

सुमन्तुस्मरणात् । तथाच विहितप्रतिषिद्धत्वाद्विकल्पः ॥७१॥

एतदर्थं कठसम्मतिमाह ।

(१) तादृशे श्रद्धाविहीने ।



**पिता यस्याग्रजो * भ्राता न कुर्याद्वा पितामहः ॥ ७२ ॥**
**तपोऽग्निहोत्रं यज्ञं वा सर्वं † कुर्यात् कठाश्रयात् ।**

पितेति । तप आधानम् ॥७२॥

अथ सोदरगतनिमित्तान्याह ।

**योगशास्त्राभियुक्ते वा कुब्जे वा वामने जडे ॥ ७३ ॥**
**गद्गदे वाऽग्रजे दुष्येत्परिविन्दन्न चानुजः ।**

योगेति । योगः पातञ्जलम् । कुब्जो भग्नपृष्ठः । वामनो ह्रस्वः । जडो वेदशून्यः ॥७३॥

गद्गदः स्खलद्गीः । एषां शुचित्वेऽपि कर्मानर्हत्वमसामर्थ्यात् । न हि सर्वस्मिन् इष्टिवेद्यादौ स्रुगासादनादिसम्भवः । तदर्थं च स्रुगादिपरिमाणबाधेन कार्यानुपपत्तेश्चेति दिक् ।

देशान्तरस्थे सत्यपि ज्येष्ठे नानधिकारः इत्याह ।

**देशान्तरस्थो न ज्येष्ठो ज्ञायेताहितवानिति ॥ ७४ ॥**
**कनीयानधिकारी चेदादधीताविचारयन् ।**

देशान्तरस्थ इति ॥७४॥

प्रोषितज्येष्ठस्य तु कालविशेषप्रतीक्षयैवाधिकारः इत्याह ।

**प्रोषितस्तु यदा ज्येष्ठो ज्ञायेतानाहितानलः ॥ ७५ ॥**
**षड्वत्सरान् प्रतीक्षेत आदधीतानुजस्ततः ।**

* यस्याग्रजो, — इति क० पुस्तके पाठः ।

† सुतः, — इति ग० पुस्तके पाठः ।

प्रोषित इति। अनयोर्विशेषो हेमाद्रौ कल्पतरौ च ज्ञेयः। विस्तरभयान्नोच्यते ॥७५॥

परीष्टिदोषस्य मतान्तरेण वैकल्पिकत्वमाह।

**यद्वा पापं भवेज्ज्येष्ठात् पूर्वं भार्यापरिग्रहे ॥ ७६ ॥**
**यागाग्निहोत्रे तन्नास्तीत्याह कश्चिन्मतान्तरम्।**

यद्वेति। यागः आधानपूर्णमासादिः। एतच्च अनुज्ञापरम्।

"सोदराणान्तु सर्वेषां परिवेत्ता कथं भवेत्।
दारैस्तु परिविन्देरन्नाग्निहोत्रेण नेज्यया" ॥ इति

स्मरणात्। इदं च विवाहे प्रायश्चित्ताधिक्यज्ञापनार्थं वचनमिति केचित् ॥७६॥

न कुर्याज्जनके ज्येष्ठे इति प्रागुक्तस्यापवादमाह।

**पितरि प्रेतभार्ये वा देशान्तरगतेऽपि वा ॥ ७७ ॥**
**अधिकारविघातस्तु न पुत्रस्योपजायते।**

पितरीति। अत्रापि देशान्तरपुरस्कारेण वत्सरादिकालप्रतीक्षणं ज्ञेयम् ॥७७॥

वैकल्पिकमधिकारिविशेषणमाह।

**कृष्णकेशः समुत्पन्नपुत्रोऽग्न्याधेयमाचरेत्* ॥ ७८ ॥**
**सूत्रान्तरेष्वनुक्तत्वान्नियमो नेति केचन।**

कृष्णकेश इति। कृष्णकेश इति शरीरवयोपलक्षकम्। जातपुत्र इति। तामाशिषमाशासते तन्तवे ज्योतिष्मतीमिति श्रुत्याद्यस्य

* मारभेत्, – इति क० पुस्तके पाठः।



पुत्रोऽजातः स्यादिति श्रुतौ श्रवणाज्जातपुत्र इत्यवस्थाविशेषोपलक्षकम्। सा च षोडशवर्षादूर्ध्वेति। तेनाष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं चरेदिति स्मृतिस्त्यक्ता भवति। स्मृत्यनुग्रहाय मतान्तरमाह। नियम इति। सूत्रान्तरेषु तन्मूलभूतश्रुतिवचनेषु। *यदहरेवैनं श्रद्धोपनमेद्यादधीतेति श्रवणात् ॥७८॥

क्वचित्पत्नीं विनैवाधिकारमाह।

**व्यभिचारवती योषा द्वेषिणी द्रोहिणी च या ॥७९॥**
**आधाने सा परित्याज्या न वा त्याज्या† मतान्तरात्।**

व्यभिचारवतीति। द्वेषिणी भर्तृद्वेषिणी। द्रोहोऽप्रियभाषणं कर्म च। आधाने आधानोत्तरभाविकर्मसु च। परित्याज्या अनधिकारिणीति भावः। मतान्तरमाह। न वेति। मतान्तरात् सहाधिकारवादिमतादित्यर्थः ॥७९॥

अधुना यजमानासन्निधाने क्वचित्कर्मणि पत्न्या अधिकार इत्याह।

**देशान्तरगते पत्यावग्निहोत्रादिकं तथा ॥ ८० ॥**
**ऋत्विक्समाहिता‡ पत्नी कुर्यान्नैवं§ तु सौमिकम्।**

* यथा, – इति ख० पुस्तके अधिकः पाठः।
† नाधिकारो, – इति क० पुस्तके पाठः। सूत्रकार, – इति ग० पुस्तके पाठः। न वा त्याज्या इति पाठान्तरतया तत्र लिखितमस्ति।
‡ समायुता, – इति ग० पुस्तके पाठः।
§ नैव, – इति क० ख० पुस्तकयोः पाठः।

देशान्तरेति । अग्निहोत्रादिकमिति । आदिना पूर्णमासादि सर्वं नित्यम् । ऋत्विगिति ।

"निक्षिप्याग्नीन् स्वदारेषु परिकल्प्यर्त्विजं तथा" ।

इति वचनात् । सोमसंस्थां निषेधति । नैवमिति ॥८०॥

रुद्रदत्तमतमाह ।

**पितृयज्ञाग्निहोत्रं च* प्रकृतेष्टिं विनेतरत् ॥ ८१ ॥**
**पश्विज्यासोमयागादि याजमान† क्रियाऽन्वितम् ।**
**स्वामिनि प्रोषिते नास्तीत्युक्तं शब्दानुसारिणा ॥ ८२ ॥**
**याजमानक्रियाशून्यं दर्विहोमादि किञ्चन ।**

पितृयज्ञ इति । एतत्त्रयं विनाऽन्यत्किमपि न भवतीत्यर्थः । याजमानक्रियाऽन्वितमित्येतेन वक्ष्यमाणाग्रयणे व्रीहिस्तम्बपक्षो भवतीति भावः ॥८१॥

ननु तथापि त्यागस्य याजमानस्य विद्यमानत्वेन तच्छून्यत्वात् कथमधिकार इत्याशङ्कां परिहरति ।

यजमानेति । याजमानक्रिया पूर्णपात्रग्रहणविष्णुक्रमणादयः । तच्छून्यं कुर्यात् ॥८२॥

**उद्देशत्यागमात्रेण याजमानेन संयुतम् ॥ ८३ ॥**
**कुर्यादवसरप्राप्तमृत्विक् पत्नीसमन्वितः‡ ।**

* पितृयज्ञोऽग्निहोत्रं च, — इति ग० पुस्तके पाठः ।
† पावमान, — इति क० पुस्तके पाठः ।
‡ पत्नीसमीपतः, — इति ग० पुस्तके पाठः ।



देवतोद्देशत्यागात्मकयाजमानसहितं तु काले काले ऋत्विक् कुर्यात् त्यागमात्रं पत्नी कुर्यादित्यर्थः ॥८३॥

उभयासन्निधानेऽपि पूर्वोक्तत्रयाणां कर्मणां* अवश्यकरणमाह ।

**पत्न्यां रजस्वलायां वा प्रसूतायामथापि वा ॥ ८४ ॥**
**सर्वमेव† नियुक्तः सन् कुर्यादृत्विग्यथोचितम् ।**

पत्न्यामिति । अपिशब्दात्पतितायाम् । वाशब्दो विकल्पे । सर्वं कर्म त्यागञ्च । ऋत्विगध्वर्युः । यथोचितं ब्रह्मादयः स्वं स्वं कर्मेत्यर्थः । तदभावे त्रयो द्वौ वा एको वा प्रचरेत् । तदा बौधायननिष्कृतिः ॥८४॥

रुद्रदत्तमतमुपसंहरति ।

**अतोऽग्निहोत्रं नित्येष्टिः पितृयज्ञ इति त्रयम् ॥८५॥**
**कर्त्तव्यं प्रोषिते पत्यौ नान्यत् स्वामिक्रियाऽन्वितम् ।**

अत इति । स्पष्टम् ॥८५॥

पूर्वोक्तं दर्विहोममाह ।

**प्रवसत्याहिताग्नौ यद्याग्रयणमुपागतम्‡ ॥ ८६ ॥**
**अग्निहोत्री व्रीहिस्तम्बमिति पक्षं§ समाश्रयेत् ।**

* कर्म्मणां, — इति नास्ति क० पुस्तके ।
† पूर्व्वमेव, — इति ग० पुस्तके पाठः ।
‡ यद्याग्रयण उपागतः, — इति ग० पुस्तके पाठः ।
§ यक्षं, — इति ख० पुस्तके पाठः ।

प्रवसतीति ॥८६॥

नैमित्तिकीनामिष्टीनां गौणकालाभावात्लोपप्रसक्तावाह ।

**नैमित्तिकास्तु* जातेष्टिरुद्दाहेष्टिपूर्विकाः ॥ ८७ ॥**
**स्वाम्यागमनपर्यन्तमुत्कृष्टव्या ह्यशेषतः ।**

नैमित्तिका इति । पूर्विका इत्यत्र बहुव्रीहिः, पुरुषोपयातरूपाः । अशेषतः स्वरूपेण । तासां स्थाने पूर्णाहुतिरपि नेति भावः ॥८७॥

कर्मोपयातरूपासु विशेषमाह ।

**प्रायश्चित्तेष्टिसम्प्राप्तौ कुर्यात् पूर्णाहुतिं बुधः ॥ ८८ ॥**
**उद्दातेष्ट्युपसम्प्राप्तौ जुहुयात् द्वादशाहुतीः ।**

प्रायश्चित्तेति । प्रायश्चित्तेष्टयः व्रातपत्यादयः । बुध इति । प्रभुः प्रथमकल्पस्येत्यादिना निषिद्धं पूर्णाहुतिपक्षमेव प्रथमपक्षासमर्थोऽपि कुर्यादिति भावः । उद्दातेष्टौ विशेषमाह ।† स्पष्टम् ।‡ मिन्दाहुत्यादयः ॥८८॥

प्रोषितस्य पुनराधानप्राप्तौ निर्णयमाह ।

**अग्न्याधेयादिकं प्राप्तमुभयानुगमादिना ॥ ८९ ॥**
**स्वाम्यागमनपर्यन्तमुत्कृष्टव्यमसंशयम् ।**

* इत्थमेव पाठः सर्व्वत्र । नैमित्तिक्यस्तु. – इति तु भवितुमुचितम् ।

† अत्र, उद्देति, – इति भवितुमुचितम् ।

‡ अत्र, द्वादशाहुतयो, – इति भवितुमुचितम् ।



अग्न्याधेयमिति । आदिना सर्वैः पुनराधाननिमित्तैः । असंशयं इदिलेखोन कार्य इति भावः । यस्योभावग्नी अभिनिम्लोचेदित्युभयानुगमः प्रसिद्धः ॥८९॥

तादृशस्थले पुनराधानोत्कर्षे अग्न्युत्पत्तये* नैमित्तिकमाह ।

**मथित्वा पावकं सर्वप्रायश्चित्तं† विधाय च ॥ ९० ॥**
**मिन्दाहुत्यादिभिर्हुत्वा द्वादशानुगमाहुतीः ।**

मथित्वेति । सर्वप्रायश्चित्तश्च होमविशेषः । चकारः समुच्चये ॥९०॥

पुनराधानोत्कर्षादावपि पूर्वोक्तं नित्यं कार्यमित्याह ।

**अग्निहोत्रं यथाकालं नित्येष्टिञ्च समाचरेत् ॥ ९१ ॥**
**आ स्वाम्यागमनात्तिष्ठेदागत्याथादधीत सः ।**

अग्निहोत्रमिति ॥९१॥

केशवसिद्धान्तानुसारेण रुद्रदत्तमतमुपन्यस्य मतान्तरमत्रोपदिशति ।

**एवं केशवसिद्धान्तात् प्रोषितस्याग्निषु क्रियाम्‡ ॥ ९२ ॥**
**अवश्यं भाविनीमुक्त्वाऽधुना वक्ष्ये मतान्तरम् ।**

एवमिति ॥९२॥

* अनुत्पत्तये, – इति क० पुस्तके पाठः ।

† सर्व्वं प्रायश्चित्तं. – इति ग० पुस्तके पाठः ।

‡ क्रियाः, – इति क० ख० पुस्तकयोः पाठः ।

§ अवश्यं भाविनीमुक्त्वा. – इति क० ख० पुस्तकयोः पाठः ।

**काम्याः क्रिया न कर्त्तव्याः स्वामिनि प्रोषिते सति ॥९३॥**
**नित्या नैमित्तिकी कार्या* प्रवसत्यपि भर्त्तरि ।**

काम्या इति । अत्र भिन्नवाक्यत्वान्न पौनरुक्त्यम्(१) ॥९३॥

नित्येष्वपि क्वचिदपवादार्थमाह ।

**तत्रापि नैव कर्त्तव्याः क्रियाः सोत्तरवेदिकाः ॥ ९४ ॥**
**आधानपुनराधाने न स्तः पत्यौ प्रवासिनि ।**

†सोत्तरवेदिकाश्चातुर्मास्यपश्वादयः । नित्यनैमित्तिकत्वाभ्यां प्राप्ते निराकरोति । आधानेति ॥९४॥

अन्वाधाननिषेधे आधानोत्कर्षः स्यादित्याशङ्क्य परिहरति ।

**उभयानुगमादौ तु प्राप्तेऽग्न्याधेयतः पुरा ॥ ९५ ॥**
**न किञ्चिदग्निहोत्रादि कर्त्तव्यमिह दर्शने ।**

उभयेति । आदिपदात्पूर्णमासेष्टिः । तदभावाद्धारणञ्च न भवति । इह दर्शने एतन्मते ॥९५॥

आहिताग्नित्वमप्यधिकारितावच्छेदकमिति वक्तुं साग्नेः प्रवासमाह ।

**धनान्यर्जयितुं युक्तः प्रवासो ह्यग्निहोत्रिणः ॥ ९६ ॥**
**धनैर्हि सम्भवेदिज्या तीर्थाद्यर्थन्तु न व्रजेत् ।**

* नित्यनैमित्तिकीः कुर्य्यात्, — इति ग॰ पुस्तके पाठः ।
† अत्र, तत्रापीति, — इति भवितुमुचितम् ।

(१) स्वामिनि प्रोषिते इति प्रवसत्यपि भर्त्तरीति न पुनरुक्तं भिन्नयोर्वाक्ययोरुपादानादिति भावः ।



धनानीति । आहिताग्नेरर्थलिप्सया प्रवासोयुक्तो भवति ॥९६॥

तत्रापि हेतुमाह । धनैरिति । यागस्यार्थसाध्यत्वात् । परिशेषात् सिद्धार्थमनुवदति । तीर्थेति । आदिपदात्सुहृद्दर्शनादिकार्यान्तराणि । तर्ह्येतस्य(१) महाफलदतीर्थस्नानादिजन्यमपूर्वं न स्यात् तद्विधायकवाक्यानां सङ्कोचापत्ति*श्चेत्यत आह ।

**ब्रह्मा विष्णुः शिवः सूर्यो गोविप्राः पितृदेवताः† ॥ ९७ ॥**
**अग्निहोत्रिगृहे सन्ति व्रततीर्थतपांसि च ।**

ब्रह्मेति । ब्रह्मादिग्रहणं देवतामात्रोपलक्षणार्थम् । पितृदेवताः कव्यवाहनलादयः ॥९७॥

व्रतानि एकादश्यादीनि । तीर्थानि पुष्करादीनि । तपांसि पराकादीनि‡ । वैश्वानर्यादिद्वारा अग्निहोत्रसंज्ञकं कर्म यस्यास्तीति अग्निहोत्री । तद्गृहे विद्यन्ते । तदुक्तं यज्ञपार्श्वे ।

"एवं सति गृहस्थस्य गृहे सन्त्यग्निहोत्रिणः ।
देवता ब्रह्मविष्ण्वीशा इन्द्रोपेन्द्रादयस्तथा ॥
अग्निहोत्रेण तुल्यं हि नैवेति तीर्थमालिका ।
ब्रह्मादितर्पणं नैव न तपो न जपादिकम्" ॥ इति ॥

* चस्तेः, — इत्यादर्शपुस्तकपाठो नातीव समीचीनः ।
† ब्रह्मा विष्णुश्च रुद्रश्च गौर्गुरुः पितृदेवताः, — इति पाठान्तरमस्ति ग॰ पुस्तके ।
‡ शाल्ययसंज्ञः क॰ पुस्तके ।

(१) एतस्य आहिताग्नेः ।

अपरे त्वेवं वर्णयन्ति ।

"अर्के* चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।

इष्टस्यार्थस्य सम्प्राप्तौ को विद्वान् यत्नमाचरेत्† ॥"

इति न्यायेन तीर्थक्षेत्राद्यर्थप्रवासो न भवति । अर्थार्थमत्यन्तावश्यककार्यार्थञ्च प्रवासोऽस्त्येवेति । उक्तञ्च ।

"दृष्टार्थाय प्रवासस्तु नादृष्टाय कथञ्चन" । इति ।

तथा ।

"न विना च निमित्तेन क्रीडाद्यर्थन्तु न व्रजेत्" । इति ।

तपोग्रहणेन प्रायश्चित्तप्रत्याम्नायनिर्दिष्टतीर्थस्नानक्रोशादिपरिमाणगमनार्थप्रवासाः प्रत्याख्याताः । व्रतग्रहणाच्च एकादश्यादिष्वपि होमाङ्गभूतस्तव्यभक्षणहविःशेषभक्षणे न व्रतलोपप्रसक्तिरिति ध्येयम् । ब्रह्मादियजनेन गोब्राह्मणपरिचर्यया पितृदेवतातृप्त्या व्रताचरणेन तीर्थस्नानेन तपःक्लेशेन यद्धर्मजातं, तदग्निहोत्रादिकर्मणा जायते इति । यथा ।

"यावानर्थ उदपाने सर्वतः संप्लुतोदके" ।

तथाऽत्रेति ।

सत्याञ्च प्रवासानुज्ञायामन्देशतः कालतश्चावधिमाह ।

**अग्निहोत्रेण रहितः पन्थानं शतयोजनम् ॥ ९८ ॥**

**आहिताग्निः प्रयायाच्चेदग्निहोत्रं विनश्यति ।**

---

* अर्के,– इति ग्रन्थान्तरे पाठः ।

† यत्नमाचरेद्,– इति ग्रन्थान्तरीयः पाठः ।



**अब्दं स्वयमजुह्वद्यो ह्वावयेद्वर्त्विगादिना ॥ ९९ ॥**

**तस्य स्यात्पुनराधेयं पवित्रेष्टिरथापि वा* ।**

अग्निहोत्रेणेति द्वाभ्याम् । गुणविध्याश्रयणेनाग्निहोत्रशब्दोऽग्निवाची । साग्निप्रवासे दोषाभावज्ञापनार्थं रहित इति । शतं योजनानि यस्मिन् ॥९८॥

साग्निकोपलक्षणार्थं आहिताग्निरिति । अनर्थक्याद्दुर्बलमपि सबलं भवतीति न्यायात् ।

अब्दमिति । अजुह्वत् होममकुर्वन् । तच्च प्रवासाद्वान्यथा वा भवति ॥९९॥

केनापि हेतुना तथाब्दं स्वयं होममकुर्वतः पुनराधेयं नैमित्तिकं स्यात् । सूत्रान्तरस्थं विकल्पमाह । पवित्रेष्टिरिति । अपरे तु, प्रवासहेतुना पुनराधेयमशक्ततया पवित्रेष्टिरिति व्यवस्थितविकल्पमाहुः । एतेनार्थार्थमपि चतुःक्रोशात्मकयोजनस्य शतसङ्ख्योर्ध्वं प्रवासस्तन्मध्ये चाब्दपर्यन्तं प्रवासो न कार्यं इत्यभिहितं भवति ।

एवं हि श्रूयते । यावज्जीवं दर्शपूर्णमासाभ्यां यजेत । त्रिंशद्वर्षाणि दर्शपूर्णमासौ । जीर्णो वा विरमेदिति । तत्र त्रिंशत्संवत्सरपक्षे तदूर्ध्वं दर्शपूर्णमासयोरेवाकरणमुत कर्ममात्रस्येति विप्रतिपत्तावाह ।

**इष्टेः सङ्कल्पिते काले जीर्णत्वे त्रिंशदाब्दिके ॥ १०० ॥**

**पूर्णे सति निवर्त्तेत होमसोममखावपि ।**

---

* पवित्रेष्टिमथापि वा,– इति क० पुस्तके पाठः ।

केशवस्वामिना सर्वं स्पष्टमेतन्निरूपितम् ॥ १०१ ॥
तस्मात् त्रेताग्निनिष्पाद्यं नाग्निहोत्रादि किञ्च न ।
यद्वा नेष्टिविकाराः स्युः सर्व्वमन्यद्भवेदिह ॥ १०२ ॥
यद्वाऽग्निहोत्रमेव स्यात् पशुसोमादि न त्विति ।
त्रिंशद्दिनादिभिर्वाऽग्निहोत्राद्युपरमोऽस्त्विति ॥ १०३ ॥
वेदान्ते पुरुषार्थाधिकरणे प्राह वामनः ।

इष्टेरित्यादिचतुर्भिः । इष्टेः दर्शपूर्णमासयागस्य । सङ्कल्पिते प्रथमप्रयोगे परिगृहीते । जीर्णत्वे जीर्णो वा विरमेदिति विहितकाले । अशक्तावस्थायामिति यावत् । तथा, त्रिंशत्संवत्सरात्मके काले पूर्णे सति, होमोऽग्निहोत्रं सोममखाद्यपि सकलं कर्मजातं निवर्त्तते ।

इदं केशवस्वामिना स्पष्टमुक्तम् । ॥१००॥ ॥१०१॥

तस्मात् त्रेताग्निसाध्यं किमपि न भवेत् । (१) धारणं तु प्रतिपत्त्या अर्थवत् ।

पक्षान्तरमाह ।

(१) यदि होमादिकं किमपि न भवति तदा किमर्थमग्नियज्ञपात्रादीनां धारणमित्याशङ्क्याह, धारणमिति । प्रतिपत्त्येति । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति श्रुत्या मृतस्याहिताग्नेर्यज्ञपात्रैरग्निभिश्च दाहो-विहितः । सा तेषां प्रतिपत्तिः । तदर्थं तेषां धारणमिति भावः ।



यद्वेति । इष्टिविकाराश्चातुर्मास्यादयो न स्युः । दर्विहोमसोमविकाराश्च भवेयुः । नैमित्तिकेष्टीनां स्थाने पूर्णाहुतिः ॥ १०२॥

अथवा, पशुसोमविकारा न स्युः, दर्विहोमाग्निहोत्रादिकं भवत्येव ।

प्रथमपक्षे सम्मतिं दर्शयति ।

त्रिंशदिति । आदिपदात् सकलमपि ॥१०३॥

इति वेदान्ते पुरुषार्थाधिकरणे वामनेन साधितमित्यर्थः ।

काम्यसोमाधिकारिणमाह ।

*कुटुम्बभरणायालमन्नं यस्य त्रिवत्सरम् ॥ १०४ ॥
काम्येन सोमयागेन यजेतासौ न चेतरः ।

कुटुम्बेति ।

यावन्तो यजमानस्य स्वगृह्यानृगवादयः ।
कुटुम्बं तद्गृहस्थस्य विज्ञेयं भरणार्हणम् । इति ।

त्रिवर्षाधिककुटुम्बभरणाय द्रव्यवान् काम्यसोमानुष्ठाने अधिकृतो भवति नेतरः ॥१०४॥

नित्यन्तु सौमिकं यथालब्धगुणोपेतं कर्त्तव्यम् । तच्च यावच्छक्यन्यायोपष्टम्भार्थमाह ।

* एतस्मात् पूर्व्वं, त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेन्नरः, — इत्यर्द्धमधिकमस्ति ग॰ पुस्तके ।

**तावदन्नविहीनोऽपि कुर्य्यान्नित्यन्तु सौमिकम् ॥ १०५ ॥**
**यथालब्धगुणोपेतं यथासम्भवदक्षिणम् ।**

तावदिति ॥१०५॥

गुणा अरुणादयः । शेषं स्पष्टम् । यच्च यज्ञपार्श्वीयं वचनं, तत्काम्यसोमपरम् । नित्याकरणे दोषश्रवणात् ।

तमेवाह ।

**योऽनाहिताग्निः शतगुः सहस्रगुरसोमपः ॥ १०६ ॥**
**नासावर्चादियोग्यः स्यादित्येवं प्राह देवलः ।**

य इति । गोपदं द्रव्यादेरुपलक्षकम् । गोव्यतिरिक्तद्रव्यसाध्यत्वादाधानादेः ॥१०६॥

अर्चा पूजा । आदिपदात् श्राद्धनिमन्त्रणादि । देवलग्रहणं पूजार्थम् ।

अपाङ्क्तेयाधिकारोपजीविविषयमाह ।

**यथार्थं* भिक्षितं द्रव्यमन्यच विनियोजयेत् ॥ १०७ ॥**
**श्राद्धादौ स्यादपाङ्क्तेयो भासयोनिं च गच्छति ।**

यथार्थमिति । यथार्थं यथाप्रयोजनं यज्ञार्थमिति यावत् । अन्यच कुटुम्बभरणादौ । आदिपदादार्त्विज्यादौ ॥१०७॥

भासः शकुन्तः । काकयोनिमिति वा पाठः । एतेन याचित-

* यज्ञार्थं,— इति ग० पुस्तके पाठः ।



द्रव्येणापि नित्यं विधेयमित्युक्तं भवति । यच्च यज्ञार्थं याचितं द्रव्यमित्यादि निदानवचनं, तत् काम्यपरम् ।

अथ सत्यधिकारे नित्यकर्मणामकरणे दोषश्रवणादवश्यमनुष्ठेयत्वमाह ।

**निर्धनोधनसाध्येषु नित्येष्वधिकृतो यदि ॥ १०८ ॥**
**चौर्यादन्यैः कुमार्गैरपीष्ट्यर्थं धनमर्जयेत् ।**

निर्धनेति चतुर्भिः श्लोकैः ॥१०८॥

कुमार्गैः प्रतिग्रहादिभिश्चैः । तदुक्तम् ।

"सप्त वित्तागमाधर्म्या दायोलाभः क्रयोजयः ।
प्रयोगो विप्रयोगश्च* सत्प्रतिग्रह एव च" ॥ इति ।

चौर्यस्यापिप्रसक्तौ विप्रतिषेधः । चौर्यादिति । परस्वं नाददीतेति श्रवणात् ।

**सूर्यग्रहे कुरुक्षेत्रे मेषीकृष्णाजिनादिकम् ॥ १०९ ॥**
**चाण्डालात् प्रतिगृह्यापि यजेतावश्यकैर्मखैः ।**

यज्ञार्थं कुरुक्षेत्रादिषु प्रतिग्रहोऽपि न दोषायेति भावः ॥१०९॥

**ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ॥ ११० ॥**
**इत्यादि निन्दावाक्यानि काम्यहोमविवक्षया ।**

ये शूद्रादिति ॥११०॥

* प्रयोगः कर्मयोगश्च, — इति ग्रन्थान्तरे मनुसंहितायाञ्च पाठः ।

मन्वाद्युक्तं निन्दावचनं काम्यहोमैकविषयम्। न नित्यविषयम्। तेषां करणश्रवणस्य बलीयस्त्वात् स्मृतेश्च तदपेक्षया दौर्बल्यात्।

**आवश्यके तु सोमादौ सर्वसम्भारसम्भृते ॥ १११ ॥**
**सुवर्णव्यतिरिक्ताङ्गद्रव्यालाभे* हि चोरयत्।**

आवश्यकेति ॥१११॥

सर्वसम्भारसमृद्धौ सुवर्णभिन्नदेयदक्षिणाऽलाभे तु चौर्यमपि कृत्वा नित्यं सदक्षिणं कार्यम्। नादक्षिणोयज्ञो भवतीति श्रुतेः। यत्र सुवर्णमेव दक्षिणादेयं तत्र सुवर्णापेक्षायां यथासम्भवं देयं न तु सुवर्णचौर्यम्। तस्य महापातकत्वेनाधिकार एव विहन्येत।

"अप्यन्यार्थंगतं† कृत्वा भर्त्तव्या मनुरब्रवीत्।

इति स्मृतेः पोष्यान्तर्गतत्वाच्चाग्नीनां नित्यमनुष्ठेयमेवेति भावः।

अथोपक्लृप्तसोमभारस्यापि यष्टुः कृतदर्शपौर्णमासलब्धाधिकारकमिति विकल्पेनाह।

**दृष्टनित्येष्टिरथ वाऽनिष्टेष्टिः सोममाहरेत् ॥ ११२ ॥**
**एवं सोमेष्टिपूर्वत्वे भवेत्तुल्यविकल्पनम्।**

दृष्टेति। दृष्टा नित्येष्टिर्दर्शपूर्णमासौ येन स तथा। अथ वा अनिष्टेष्टिः सोमं कुर्यात् ॥११२॥

उभयथा श्रवणादस्तु तुल्यविकल्पः।

* सुवर्णव्यतिरिक्तान्यद्वित्तालाभे, — इति ग० पुस्तके पाठः।
† अप्यकार्य्यंगतं, — इति ग्रन्थान्तरीयः पाठः।



कल्पान्तराभिप्रायेणाह।

**व्यवस्थितविकल्पो वा कातीयवचनाद्भवेत् ॥ ११३ ॥**
**यस्तूपक्लृप्तसोमः सन्नादधीत हुताशनम्।**
**स कुर्यात् सोमपूर्वत्वमन्येषामिष्टिपूर्वता ॥ ११४ ॥**

व्यवस्थितेति ॥११३॥

व्यवस्थां दर्शयति यस्त्विति। स्पष्टम्। दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेत सोमेन वोपक्लृप्तसोम इति कात्यायनवचनात् सोमेष्टिपूर्वकत्वे व्यवस्थितो विकल्पः।

अत्रैव विधिरन्तोक्तप्रकारमाह।

**विधिरन्तोक्तमन्यादृग् व्यवस्थितविकल्पनम्*।**
**त्रिपूरुषमविच्छिन्नो यस्य सोमक्रतुर्भवेत् ॥ ११५ ॥**
**तस्य स्यात् सोमपूर्वत्वमन्येषामिष्टिपूर्वता।**

विधीति। अन्यादृक् अन्यदेव ॥११४॥११५॥

जैमिन्युक्तविषयमाह।

**विप्रे सोमेष्टिपूर्वत्वे विकल्पं प्राह जैमिनिः ॥ ११६ ॥**
**राजादेरिष्टिपूर्वत्वपक्षमेव नियच्छति।**

विप्रेति। तुल्यविकल्पो व्यवस्थितो ब्राह्मणानामेवेति भावः ॥११६॥

* विकल्पितम्, — इति ग० पुस्तके पाठः।

इष्टमित्येष्टिरित्यादिना कृतदर्शपूर्णमासस्याकृतदर्शपूर्णमासस्य च सोमेऽधिकारमुक्त्वाऽधुनाऽऽदौ ब्राह्मणनिरासार्थञ्च ऐन्द्राग्नं पुनरुत्सृष्टमालभेतेति श्रूयते, तत्राधिकारिणमाह ।

**पिता पितामहो वाऽपि सोमं यस्य न पीतवान् ॥११७॥**
**ऐन्द्राग्नं पुनरुत्सृष्टमालभेत पशुं हि सः ।**

पितेति । सोमयागेन नेष्टवानित्यर्थः । वाशब्दः समुच्चयार्थः । द्विपुरुषासोमपीथिन इति वचनात् ॥११७॥

उत्सृष्टशब्दार्थं स्वयं वक्ष्यति । देवताद्रव्यलक्षित ऐन्द्राग्नः पशुयाग उच्यते ।

द्विपुरुषासोमपीथिन इति वचने द्वेधा विप्रतिपत्तिमाह ।

**एवं मीमांसकाः प्राहुर्याज्ञिका अपि केचन ॥११८॥**
**तस्य नेष्टः पशुः कैश्चित् पिता यस्य न सोमपः * ।**

एवमिति । तत्र पूर्वोक्तपक्षो मीमांसकाभिमतः । कतिपययाज्ञिकाभिमतश्च ॥११८॥

द्वितीयं पक्षमाह । तस्येति । कैश्चित् याज्ञिकैरुच्यत इति शेषः ।

तत्र सम्मतिमाह ।

**पितर्यसोमपीथेऽपि सोमपश्चेत् पितामहः ॥ ११९ ॥**
**तत्रैन्द्राग्नो न कर्त्तव्यो भारद्वाजीयभाष्यतः ।**

* यस्य त्वसोमपः, — इति ग० पुस्तके पाठः ।



पितरीति ॥११९॥

एवं पितामहे सोमपे पितर्यसोमयाजिनि प्रायश्चित्तपशुर्न भवतीत्युक्तं भाष्ये ।

स चायं पशुर्गौर्वा छागो वेति सन्देहे सिद्धान्तमेवाह ।

**चोदकानुग्रहाच्चायं पशुश्छागोऽवगम्यते ॥ १२० ॥**
**पुनरुत्सृष्टवाच्यो हि वाहोत्सृष्टः पुनर्वहन् ।**
**छागेऽपि सम्भवत्येतद्वहत्येव हिमाचले ॥ १२१ ॥**

चोदकेति । चोदकोविध्यन्तः । सर्वेषां हि प्रकृतिरग्नीषोमीयः । स च छागएवाम्नातः, छागस्य हविष इत्यादिना । अत्रापि सामान्यपशुशब्देनोपात्तः पशुश्छाग एव भविष्यति । एवं सति चोदकानुग्रहः ॥१२०॥

न चास्य पुनरुत्सृष्टत्वं न सम्भवतीति वाच्यम् । यः पूर्वं वाहितोदौर्बल्यादुत्सृष्टः पुनश्च समर्थः स न पुनर्वाहितः, स पुनरुत्सृष्टशब्दार्थ इति । सचायं छागेऽपि सम्भवति । हिमाचलादिदेशे तस्यैव वाहकत्वात् ॥१२१॥

एकदेशिमतमुत्क्षिप्य दूषयति ।

**पुनरुत्सृष्टगोमृग इति गव्यमितीरितम् * ।**
**सूत्रे गोजातिनियतं पुनरुत्सृष्टशब्दनम् ॥ १२२ ॥**

पुनरिति । पुनरुत्सृष्टोगोमृगः † इति शाखान्तरे श्रूयते ।

* गव्या इतीरितम्, — इति क० पुस्तके पाठः ।
† पुनरुत्सृष्ट गोमृगः, — इति क० पुस्तके पाठः ।

सूत्रे तु पुनरुत्सृष्टमात्रम् । तत्र सामान्यस्य विशेषोपसंहार-न्यायेन पुनरुत्सृष्टशब्दोऽपि गोजातौ नियत इति ॥१२२॥

ननु क्वचित् सामान्यत एव श्रूयते अतो विकल्पोऽस्त्विति चेदत-आह ।

तथाऽप्यन्येऽपि तच्छब्दवाच्याः शाखान्तरश्रुतेः * ।
गोपशुः पुनरुत्सृष्टोऽग्नीषोमीयो भवेदिति ॥ १२३ ॥
पुनरुत्सृष्टशब्दार्थो गोशब्देन विशेषितः ।
तेनागौरिति † बुध्येत पुनरुत्सृष्टशब्दभाक् ॥ १२४ ॥

तथापीति । शाखान्तरे श्रवणादन्येऽपि सामान्येन श्रुताः पुनरुत्सृष्टशब्दाः । तच्छब्दो गोजातिशब्दः । शाखान्तरीयवचनमाह । गोपशुरिति । विशेषितः आग्नेयचतुर्धाकरणन्यायेन । दूषयति । तेनेति । तेन शाखान्तरस्थेन ॥१२३॥१२४॥

तस्मादन्यपरेणापि वाक्येनोक्तमसंशयम् ।
गावन्येषु ‡ च सामान्यं पुनरुत्सृष्टशब्दनम् ॥ १२५ ॥

अन्यपरेणापि गोपशुपरेणापि वाक्येन पुनरुत्सृष्टशब्दो गोषु छागेषु च सामान्येनाभिधानतां धत्ते इत्यसंशयम् ।

तथाच पुनरुत्सृष्टशब्देन छागोऽपि बुद्धिगोचरो भवति ॥१२५॥

एवं च सति अज एव ग्राह्यो नेतरः । तत्र हेतुचतुष्टयमाह ।

* शाखान्तरे श्रुतेः, — इति क० पुस्तके पाठः ।
† तेन गौरिति, — इति क० ग० पुस्तकयोः पाठः ।
‡ इत्थमेव सर्वत्र । गवान्येषु, — इति तु समीचीनं प्रतिभाति ।



वाच्यत्वस्याविशिष्टत्वाच्चोदकाल्लोकगर्हणात् ।
कलौ युगे तु गोयागनिषेधाच्च भवेदजः ॥ १२६ ॥

वाच्यत्वादिति * । शब्दस्यास्य यौगिकत्वेनोभयथाविशिष्टत्वात् । शेषं स्पष्टम् ॥१२६॥

उपसंहरति ।

पुनरुत्सृष्टशब्दार्थश्छाग एव भवेदिह ।
स्वकण्ठेन भरद्वाजः सुस्पष्टमिदमब्रवीत् ॥ १२७ ॥

पुनरिति । सम्मतिमाह । स्वेति ॥१२७॥

अस्मिन्नेवार्थे लौगाक्षिमतमाह ।

त्यक्त्वेमं पुनरुत्सृष्टं क्लेशसाध्यं पुनर्मुनिः ।
लौगाक्षिरनुत्सृष्टाख्यं पशुमत्रोपदिष्टवान् ॥१२८॥

त्यक्त्वेति । इमं पुनरुत्सृष्टशब्दम् । क्लेशसाध्यमिति लाक्षणिकम् ॥१२८॥

पारिभाषिकमनुत्सृष्टशब्दार्थमाह ।

यमयोर्यः पुरो जातः * सोऽनुत्सृष्टोऽभिधीयते ।
स सर्वथाविशिष्टत्वात् छागेऽपि न विरोत्स्यते ॥ १२९ ॥

यमयोरिति । यत्र गोपशुरित्युक्तं तत्प्रशंसार्थमर्थवादवचनम् ॥१२९॥

* इत्थमेव पाठः सर्वत्र ।
† पुरा जातः, — इति ख० पुस्तके पाठः ।

**सोमाधिकारहेतुत्वात्* सोमात्पूर्वञ्च पर्वणि ।**
**पशुरेव विधातव्य इति कर्कस्य सम्मतिः ॥ १३० ॥**

स चायं पशुः सोमाधिकारार्थमुपदिष्टः । तस्मात् सोमात्पूर्वञ्च सर्वपर्वणि कर्त्तव्यः । य इष्ट्वेति श्रवणात् । इति कर्कोपाध्यायः ॥ १२०॥

बौधायनमतमाह ।

**अग्नीषोमीयपशुना सवनीयेन वाऽप्ययम् ।**
**पशुः समानतन्त्रः स्यादिति बौधायनाशयः ॥ १३१ ॥**

अग्नीषोमीयेति । स्पष्टम् ॥१२१॥

भिन्नतन्त्राश्रयेण मतद्वयमुपन्यस्यति ।

**पृथक्तन्त्रत्वपक्षेऽपि सोमात्पूर्वमनन्तरम् ।**
**ऐन्द्राग्नोऽयं विधातव्य इत्यन्ये तु व्यवस्थिताः ॥ १३२ ॥**

पृथगिति । अनन्तरं सोमानन्तरमित्यर्थः । तथाच विकल्पः । स च व्यवस्थित एव । न लैच्छिकः । व्यवस्थिताः व्यवस्थां प्राप्ताः । सा चैवं बोध्या ।

असोमाधानिनः सोमात्पूर्वम् । सोमाधानिनस्त्वनन्तरम् । आधानानन्तरं सोमादिकरणेन सोमाधानं व्याहन्येत । तस्मात्सोमानन्तरमेवेत्याशयः । कर्कस्तु सर्वेषां सोमात्पूर्वमेवाधिकारनिष्पत्तिलाभात् । अतएव विधिरत्र साधूक्तम् ॥१२२॥

* सोमाधिकारे हेतुत्वात्, — इति ख० पुस्तके पाठः ।



दौर्ब्राह्मण्यनिमित्तकं नैमित्तिकपशुलक्षणान्तरमाह ।

**योऽसौ दुर्ब्राह्मणः सोमं पिपासति स आदितः ।**
**आलभेताश्विनं धूम्रललामं छागलं पशुम् ॥ १३३ ॥**

य इति । असौ वक्ष्यमाणलक्षणो यो दुर्ब्राह्मणो दौर्ब्राह्मण्यगुणयुक्तः सन् सोमपानं कर्त्तुमिच्छति । स आदितः, आदौ इत्यादितः । प्रथमप्रयोग इत्यर्थः । न प्रतिप्रयोगम् । स अश्विनौ देवता यस्येत्याश्विनम् धूम्रललामं धूम्रलोहितवर्णं छागलं छागं पशुद्रव्यं आलभेत । द्रव्यदेवतोपदेशादाश्विनः पशुयागः कर्त्तव्य इति चोदना ॥१२३॥

तल्लक्षणमाह ।

**वेदोवेदिश्च विच्छिन्नावुभौ यस्य त्रिपूरुषम् ।**
**दुर्ब्राह्मणः स विज्ञेयः पुनर्भूतनयोऽपि च ॥ १३४ ॥**

वेद इति । स्पष्टम् । लक्षणान्तरमाह । पुनर्भूरिति । पुनर्भूतनयः पौनर्भवः । पुनर्भूलक्षणम्* । उभयविधोऽपि दुर्ब्राह्मणः आश्विनपशुयागं कृत्वा सोमं कुर्यात् । पूर्वोक्त ऐन्द्राग्नश्च त्रिपुरुषसोमापीथित्वनिरासार्थम् । द्वितीयो† दौर्ब्राह्मण्यनिरसनार्थम् इति । निमित्तभेदान्नैमित्तिकभेदः ॥१२४॥

* एतावन्मात्रमेव क० ख० पुस्तकयोः । घ० पुस्तके तु एतदनन्तरं किञ्चित् स्थानं अक्षरशून्यं वर्त्तते । पुनर्भूलक्षणं स्मृतौ ज्ञेयम्, — इत्येवं पाठोऽत्र सम्भाव्यते ।

† द्वितीया, — इति क० ख० पुस्तकयोः पाठः ।

यद्योक्तं निमित्तभेद इति तत्र पूर्वपक्षयति।

न सोमं पीतवान् यस्य पिता वाऽपि पितामहः ।
दुर्ब्राह्मणं समाचष्टे कर्कः शाखान्तरश्रुतेः ॥ १३५ ॥

न सोममिति । द्विपुरुषासोमपीथित्वमपि दौर्ब्राह्मण्यप्रयोजकमिति भावः ॥१३५॥

यथार्थं स्मृतिं दर्शयति ।

पक्षमङ्गीकरोत्येनं मन्त्रब्राह्मणभाष्यकृत् ।
पक्षेऽस्मिन्नाश्विनैन्द्राग्नौ यद्यप्येकनिमित्तकौ ॥ १३६ ॥
तथाप्यदृष्टकार्यत्वात्तयोरिष्टः समुच्चयः ।

पक्षमिति । एवं कर्कोक्तपक्षम् । मन्त्रब्राह्मणभाष्यकृत् रामाण्डारः ।

पूर्वपक्षमुपसंहरति ।

पक्ष इति । निमित्तभेदाभावादेकमेव नैमित्तिकं स्यादिति ॥ १३६॥

सिद्धान्तमाह ।

तथापीति । अदृष्टार्थानां समुच्चय इति न्यायात् । तदुक्तं कात्यायनमीमांसायाम् । प्रायश्चित्तेषु-दोषनाशादित्यादि । एकदेशिमतमाह ।

एकस्य सोमविच्छेदे केचिदैन्द्राग्नमब्रुवन् ॥ १३७ ॥
त्रयाणां सततं सोमे लुप्ते त्वैन्द्राग्नमाश्विनम् ।



एकस्येति। एकस्य पितुः पितामहस्य वा असोमपीथित्वे ऐन्द्राग्न एव एकः पशुर्भवतीति ॥१३७॥

त्रयाणां पित्रादीनां अविच्छेदेन असोमपीथित्वे तु पशुद्वयं भवतीति केषाञ्चिन्मतम् । भिन्नतन्त्रत्वपक्षेऽपि एतयोः समानतन्त्रतैवेत्याह ।

तयोः समानतन्त्रत्वं नानातन्त्रत्वमेव वा ॥ १३८ ॥
समानतन्त्रपक्षेऽपि चैन्द्राग्नः प्रथमो भवेत् ।
एकादशिनितन्त्रत्वं भवेत्पशुगणत्वतः ॥ १३९ ॥
किन्त्वेतावान्विशेषोऽत्र बहुत्वे द्वित्वमूह्यते ।

तयोरिति । तयोः पूर्वोक्तयोः । समानतन्त्रतायां हेतुः, पशुगणत्वतः । यथैकादशिन्यां सिद्धान्तितत्वात् ॥१३८॥१३९॥

यथैकादशिन्यपेक्षया विशेषमाह ।

किन्त्विति । यत्र बहुवचनान्तप्रयोगस्तत्र द्वित्वेनोहः । सोऽपि प्रकृतौ समवेतार्थानां दृष्टार्थानां मुख्यार्थानां यजुर्मन्त्राणामेव । एवं पिता पितामहो वाऽपीत्यादिग्रन्थेन चीर्णदौर्ब्राह्मण्यपरिहारप्रायश्चित्त एवाधिकारी भवतीति प्रतिज्ञातं भवतीति ।

अधुनाऽशौचादिदोषरहित एव सोमेज्याऽधिकारी भवतीति ज्ञापनायोपक्रामति ।

रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ॥ १४० ॥
नित्यं नैमित्तिकं कुर्यात् काम्यं कर्म* न किञ्चन ।

---

* काम्यकर्म्म, — इति क॰ पुस्तके पाठः ।

**आधानं पुनराधानं* पशुः सौत्रामणी तथा ॥ १४१ ॥**
**चातुर्मास्यानि सोमश्च तथैवाग्रयणक्रिया ।**
**अकाम्यत्वेऽपि नैतेषां सूतकादावनुष्ठितिः ॥ १४२ ॥**

रजोदोष इति । रजोरूपो दोषः । दम्पत्योस्तुल्याधिकारस्य पूर्वं सिद्धाग्नित्वात् तस्याः रजःसङ्क्रमे सति किमपि कर्म न स्यात्तथाऽशौचेऽपीत्येकदेशिमतं दूषयति ।

नित्यमिति । यदकरणे प्रत्यवायस्तन्नित्यं अग्निहोत्रहोमादि । भवति चास्य नियतनैमित्तिकत्वान्नित्यत्वव्यवहारः । निमित्ताज्जायते यत्, तन्नैमित्तिकं क्षामवत्यादि । नन्विदमपि नित्यलक्षणाक्रान्तत्वान्नित्यमिति चेत् । न । न हि क्षामवत्यादि निमित्ताभावेऽकरणेन प्रत्यवायं जनयति । निमित्तानन्तरं प्राप्तौ नैमित्तिकपदावरुद्धत्वाच्च नित्यत्वम् । तथा चानयोर्यावज्जीवन्यायोपष्टम्भकत्वेन कर्त्तव्यतासिद्धौ काम्ये तु सगुणस्यैव फलसमर्पकत्वात्पत्न्यादिकर्त्तृकधर्मलोपेन फल्गुत्वाच्च प्रवृत्तिरिष्टेति भावः । ननु तर्ह्याधानमपि रजोदोषादौ विधेयं स्यादित्याशङ्कां निराकरोति । आधानमिति । तच्चाधानं नित्यमिति याज्ञिका मीमांसकैकदेशिनश्च । स्वाभिमतं च । पुनराधेयस्य नैमित्तिकत्वेन प्राप्तिः, अन्येषान्तु नित्यसंस्थात्वेन प्राप्तिः । अकाम्यत्वेऽपीति नित्यनैमित्तिकत्वे यथासं† ज्ञेयम् ॥१४०॥१४१॥१४२॥

* आधानपुनराधाने, — इति ख॰ पुस्तके पाठः ।

† यथासंख्यं, — इति क॰ पुस्तके पाठः । ख॰ घ॰ पुस्तकयोः पाठ एव तु मूले निवेशितः । मम तु, नित्यनैमित्तिकत्वं यथासं ज्ञेयम्, — इति पाठः प्रतिभाति ।



प्रारम्भोवरणं यज्ञे, आरम्भातिक्रमोदोषश्चासमाप्तौ स्यात् न स्यादिति सिद्ध्यर्थं सर्वकर्मसाधारणमनुवदति ।

**प्रक्रान्तेष्वपि चैतेषु सूतकादिसमुद्भवे ।**
**कर्त्तव्यान्यपि चैतानि वारितान्यप्यशेषतः ॥ १४३ ॥**

प्रक्रान्तेष्विति । अशेषतः अशेषाणि नित्यनैमित्तिककाम्यानि । वारितानि कर्त्तव्यतानिषिद्धानि । पूर्वमिति शेषः । तत्राप्याधानगतो विशेषो वक्ष्यते ॥१४३॥

अधुना पातित्यादिदोषरहितत्वमप्यधिकारितावच्छेदकमित्याह ।

**पतितो नैव कुर्वीत शास्त्रीयं कर्म किञ्चन ।**
**प्रारब्धमपि सञ्जह्यादन्तरा पतितो भवेत् ॥ १४४ ॥**

पतित इति । स च प्रायश्चित्तानर्हः प्रायश्चित्तानिच्छुश्चेति द्विविधः । अन्यः प्रायश्चित्ती । लौकिककर्मव्युदासार्थं, शास्त्रीयमिति । ननु आरम्भान्नियम इत्यादिना तस्यापि प्रक्रान्ताधिकारः प्रसक्त इति पूर्वपक्षं निराकरोति । प्रारब्धमिति । प्रकृतिस्थेन आरब्धे कृते मध्ये पातित्यनिमित्ते तत्रैव कर्मसमाप्तिर्न तु तदुत्तरं करणमिति भावः ॥१४४॥

न चैवमसत्यभाषणस्यापि शास्त्रीयत्वेन निषेधः स्यादित्याशङ्क्य निराकरोति ।

**अद्विजेष्वेव यो धर्मो धर्मः साधारणोऽपि वा ।**
**सत्यं वक्तव्यमित्यादिः पतितोऽपि समाचरेत् ॥ १४५ ॥**

चादिशेष्विति । त्रैवर्णिकव्यतिरेकेण योधर्मोऽसाधारण यज्ञो-मनादिभिरिति शेषः । प्रदक्षिणादिरूपः । अपि वा द्विजादिज-साधारणेन योधर्मः सत्यवदनस्नानाचमनरूपस्तं कुर्यादित्यर्थः ॥ १४५॥

ननु पतितस्य शास्त्रीयकर्मनिषेधात् कथमश्वमेधावभृथस्नातः शुध्येदित्यश्वमेधेऽधिकार इत्याशङ्क्याह ।

अश्वमेधादिके यज्ञे महापातकनाशने ।
पतितस्याधिकारोऽस्मिन् प्रत्युतानुगुणो भवेत् ॥ १४६ ॥

अश्वमेधेति । आदिपदाद्व्रात्यस्तोमादिः । हेतुगर्भं विशेषण-माह । महापातकेति । अधिकारोऽस्तीति किं वक्तव्यम् । प्रत्युत ब्रह्महत्यादिपापक्षयकामनाया अनुगुणः प्रायश्चित्तानुकल्प एव भवेत् । उपदेशात् ॥१४६॥

अथ श्रूयते। न ब्राह्मणं हन्यात्, न कलञ्जं भक्षयेत् । इत्यादि निषेधास्ते पतितेन पालनीया न वेति सन्देहे पूर्वोक्ताधिकारन्या-येन न पालनीया इति पूर्वपक्षं निराकरोति ।

पतितोऽपि निषिद्धानां वर्जनेऽधिकृतो भवेत् ।
ब्रह्मघ्नस्यापि तेनान्या ब्रह्महत्या न युज्यते ॥ १४७ ॥

पतितेति । ब्रह्मघ्नस्य ब्रह्महत्याभ्यासे प्रायश्चित्तविशेषाकाङ्क्षा-दित्यर्थः ॥१४७॥

ननु स कुर्यात् पतितव्रतमित्यादिकेन यस्य पतितातिदेशोऽस्ति



तस्य पूर्वोक्तन्यायेनानधिकारिता धर्मातिदेशाद्भवति न वेति सन्देहे सिद्धान्तमाह ।

पतितत्वातिदेशेषु नाऽधिकारो विनश्यति ।
निष्कृतिर्ह्यतिदेश्याऽत्र न कर्मानधिकारिता ॥ १४८ ॥

पतितत्वेति । स पतितवद्भवेदित्यादिवाक्यैः पातित्यातिदेश-स्तत्र नाऽधिकारविघातः । न चातिदेशोऽव्यर्थः । प्रायश्चित्तार्थमिति भावः ॥१४८॥

पतितस्य प्रसङ्गोपजीविविषयमाह ।

पतितस्य प्रसङ्गेन * बन्धुपातित्यहेतुकम् ।
विशेषमभिधास्यामः कर्मभेदेषु केषुचित् ॥ १४९ ॥

पतितस्येति । प्रसङ्गेनेति । प्रसङ्गसङ्गत्येत्यर्थः । बन्धुशब्देन सपि-ण्डावान्तवाख्य ॥१४९॥

अथेदं चिन्त्यते। सुब्रह्मण्यं च प्रेष्यति पितापुत्रीयामिति † ज्यो-तिष्टोमादिकर्मविशेषे श्रूयते । तत्र संशयः । पित्रादीनां पतितत्वे सुब्रह्मण्यानामग्रहः कर्त्तव्यो न वेति सन्देहे पित्रादीनां शास्त्रीय-कर्मसम्बन्धाभावात् कर्त्तव्य इति पूर्वपक्षं निराकरोति ।

पितुर्न नाम निर्देश्यं महापातकदोषिणः ।
आवेदनादिकार्येषु किन्तु तत्परभाविनाम् ॥ १५० ॥

* पतितत्वप्रसङ्गेन, – इति सर्वत्र पुस्तकेषु पाठः । टीकासम्मतपाठस्तु मूले निवेशितः ।
† पितापुत्रियामिति, – इति क० पुस्तके पाठः ।

पितुरिति । ननु द्वारलोपात्तलोपः स्यादित्यत आह । किञ्चेति । परभाविनः पितामहादयः त्रयः तेषां नामनिर्देशः । आवेदनं सुब्रह्मण्याशंसनम् । आदिपदान्नान्दीश्राद्धादौ ॥१५०॥

पितृपितामहयोः पतितत्वे निर्णयमाह ।

**पितामहपुरोगानां त्रयाणां नाम निर्दिशेत् ।**
**पितामहोऽपि दुष्टश्चेत् प्रपितामहपूर्व्वकाः ॥ १५१ ॥**

पितामह इति । स्पष्टम् ॥१५१॥

त्रयाणामपि सन्ततं * दुष्टत्वे निर्णयमाह ।

**निर्दिष्टव्यास्त्रयोमर्त्यास्तस्मिन्नपि विदूषिते ।**
**प्रपितामहपित्राद्यास्त्रयोवाच्या यथाक्रमम् ॥ १५२ ॥**

प्रपितामहेति । प्रपितामहपिता प्रपितामहपितामह इत्यादिनिर्देशः कार्य इत्यर्थः । इदञ्चोपलक्षणम् । एवं चतुर्णामपि दुष्टत्वे प्रपितामहपितामहेत्याद्युन्नेयम् ॥१५२॥

**दुष्टश्चेन्मध्यमः कश्चित्तद्वर्जं पूर्वपश्चिमान् ।**
**त्रीनेव निर्दिशेन्मर्त्यान् किं त्वत्रैतद्विशिष्यते ॥ १५३ ॥**

पुरुषत्रमध्ये मध्यमः पितामहो दुष्टश्चेत्तं वर्जयित्वा पूर्वपश्चिमा-वुल्लेख्याः । पित्रादित्रयाणां दुष्टत्वे प्रपितामहपित्राद्युपादाने च तत्रापि मध्यमदुष्टत्वे पूर्वपश्चिमयोरेव निर्देशः कार्यः । एतदर्थं

* सततं, – इति क० पुस्तके पाठः ।



कश्चिदिति पूर्वपश्चिमानित्यत्र बहुवचनान्तत्वञ्च । ननु निर्देशस्त्र-याणां श्रूयते तत् कथमुच्यते पूर्वपश्चिमानिति पूर्वपक्षमुद्भावयति । त्रीनिति । श्रूयत इति शेषः । सिद्धान्तयति । किञ्चेति । अत्र द्वयोरेव नामग्रह इति विशेषशास्त्रेण सामान्यस्य बाधादित्याशयः ॥ १५३॥

सुब्रह्मण्याह्वाने श्रूयते । अमुकस्य पुत्रो यजेत इति । तत्र संशयः । पित्रादीनां दुष्टत्वे पुत्रादिपदैर्निर्देशो नाम्ना वा । तत्र सिद्धान्तमाह ।

**येषां केषाञ्चिन्मर्त्यानां नामान्यध्वर्युरादिशेत् ।**
**तेषां पुत्रस्य पौत्रस्य नप्तेत्यादिश्यते पतिः ॥ १५४ ॥**

येषामिति । येषामदुष्टानां * प्रपितामहादीनां नामानि कथयेत् तेषामेवायं यष्टा पुत्रादिनोल्लेख्यः ॥१५४॥

ननु कथमस्य तेषां पुत्रत्वादीत्यत आह ।

**पितामहादिचितये पित्रादित्वयभावना ।**
**अन्यादृशेऽपि सम्बन्धे निर्देशस्त्वेवमेव हि ॥ १५५ ॥**

पितामहादीति । ये नामग्रहयोग्याः तेषां पित्रादिभावना कार्या । यद्यपि नैव † सम्बन्धः, तथाप्येवमेव निर्देशो वचनात् ॥१५५॥

मात्रादित्रये अतिदेशार्थमाह ।

* येषां दुष्टानां, – इति क० पुस्तके पाठः ।
† इत्यमेव पाठः सर्व्वत्र । नैवं, – इति तु पाठः समीचीनः प्रतिभाति ।

मात्रादीनामिदं स्त्रीणां योजनीयमशेषतः।
निर्देशत्यागयोर्नाम्नो * महापातकसम्भवे ॥ १५६ ॥

मात्रादीनामिति। इदं पूर्वोक्तलक्षणम्। नाम्नो निर्देशस्त्याग-स्तानयोर्निर्णये योजनीयम् ॥१५६॥

अधुना दत्तके निर्णयमाह।

यजमानस्य यस्य द्वौ पितरौ वा पितामहौ।
पितुः पितामहौ तस्य निर्दिशेद्वंशयोर्नरान् ॥ १५७ ॥

यजमानेति। यस्य यजमानस्य त्रयाणां मध्ये यः कश्चन दत्तको-भवेत्, तस्य यजमानस्योभौ वंशौ निर्देष्टव्यौ ॥१५७॥

मात्रादिवंशे तत्सपत्नीनामप्युल्लेखो भवतीत्याह।

निर्देश्यानाञ्च योषाणां सपत्न्योऽत्र भवन्ति चेत्।
तासामपि समस्तानां नामनिर्देश इष्यते ॥ १५८ ॥

निर्देश्यानामिति ॥१५८॥

अथ पुत्रनामनिर्देशे निर्णयमाह।

औरसा एव पुत्रा ये महापातकवर्जिताः।
तेषां नाम ग्रहीतव्यं सुब्रह्मण्यादिकर्मसु ॥ १५९ ॥

औरसा इति। स्वपत्न्यां स्वस्मात् जाता औरसाः। तेषामपि पतितत्वे न निर्देश्याः अन्यथा निर्देश्याः इत्याह। महापातकेति ॥ १५९॥

* निर्देशत्यागयोर्नाम्नां, — इति ग० पुस्तके पाठान्तरम्। निर्देशत्यागयो-र्नाम्नां, — इति ग० घ० पुस्तकयोः पाठः।



औरसग्रहणादेव सिद्धेऽर्थे स्पष्टार्थमाह *।

पुत्राणां क्षेत्रजादीनां साधूनामपि नेष्यते।
तथैव भ्रातृपुत्राणां पुत्रिकासन्ततेरपि ॥ १६० ॥

पुत्राणामिति। औरसपुत्राणामिव भ्रातृपुत्राणामपि स्यादि-त्याह। तथैवेति। अपिशब्दात् कन्यापत्यानामपि औरसवन्नि-र्देश इत्यर्थः ॥१६०॥

मृतानामपि अपत्यत्वात् स्यादत † आह।

जीवतामेवापत्यानां यथाज्येष्ठं प्रकीर्तितम्।
स्त्रीप्रजानामधेयञ्च पुंवदेव प्रकीर्त्यते ॥ १६१ ॥

जीवतामिति। क्रममाह। यथाज्येष्ठमिति। स्त्रीप्रजास्वपि साधुत्वे यथाज्येष्ठक्रमातिदेशार्थमाह। स्त्रीप्रजेति। स्पष्टम्। अमुकस्य प्रपितामहो यजत इति नप्तृनामनिर्देशः ॥१६१॥

तेषामप्यपत्यञ्चेत् यथायोगं यथासम्भवं निर्देशो भवतीत्याह।

नप्त्रादीनामपत्यानि यदि जातानि कानिचित्।
तेषामपि समस्तानां नामधेयं विनिर्दिशेत् ॥ १६२ ॥

नप्त्रादीनामिति। प्रायोऽसम्भवाद्यदीत्युक्तम् ॥१६२॥

* स्पष्टतार्थमाह, — इति ख० पुस्तके पाठः।
† स्यादत्र, — इति क० पुस्तके पाठः।

अनिष्यमाणापत्यानां नाम्नाऽनुकीर्त्तनं न सम्भवतीति हेतुदर्शनपुरःसरमाह ।

**अनिष्यमाणापत्यानामिदानीं नाम वर्जयेत् ।**
**अनिष्यमाणशब्देनैवेष्टं सम्बन्धकीर्त्तनम् ॥ १६३ ॥**

अनिष्यमाणेति । नामदेशं विना केवलं अनिष्यमाणशब्देन सम्बन्धकीर्त्तनं न कार्यम् । कुतः । नामनिर्देशस्यापि वाक्यावयवात् तस्येदानीमभावात् । द्वादशेऽहनि पिता नाम कुर्यादिति श्रुतेः ॥१६३॥

गतं प्रसङ्गानुप्रसङ्गम् । अथ यथोक्तदेशविशेषवत्त्वमपि सोमेज्यादिष्वधिकारितावच्छेदकमिति व्यतिरेकमुखेनाह ।

**देशदोषवशेनापि विनश्यत्यधिकारिता ।**
**अङ्गवङ्गकलिङ्गादौ म्लेच्छादिनिलये यथा* ॥ १६४ ॥**

देशेति । सर्वाणि निमित्तान्तराण्येव । तेनार्यावर्त्तादावपि म्लेच्छादिनिलये नाधिकारः । आदिपदादन्तरिघाणाच्छादनादयः ॥ १६४॥

अथ कालस्यापि अधिकारितावच्छेदकत्वमिति व्यतिरेकमुखेनाह ।

**कालदोषोऽधिकारस्य हानिं वितनुते क्वचित् ।**
**मलमासे यथा सर्वकालान्तरमलावहे ॥ १६५ ॥**

* तथा, — इति क॰ ख॰ पुस्तकयोः पाठः ।



कालदोष इत्यादिना । कालस्य दोषः सत्यप्यधिकारे अधिकारहानिं कुरुते । प्रारब्धकर्मणामगतिकानां च नाधिकारविघात इति सूचयितुं क्वचिदिति । दोषं दिङ्मात्रमुदाहरति । मलमासेति ॥१६५॥

तल्लक्षणमाह ।

**सूर्यसङ्क्रान्तिरहितो मलमासोऽभिधीयते ।**
**तत्रानन्यगतिं नित्यां* कुर्यान्नैमित्तिकीं क्रियाम् ॥ १६६ ॥**
**काम्यन्तु यागहोमादि न तत्रेष्टं कथञ्चन ।**
**नित्याऽपि तत्र नैवेष्टा क्रिया गत्यन्तरे सति ॥ १६७ ॥**

सूर्येति । पूर्वं क्वचिदुक्तं तत्प्रपञ्चार्थमाह । तत्रेति । तत्र मलमासे अनन्यगतिकं नित्यं नैमित्तिकं कुर्यात् । काम्यन्तु नैव भवेत् । सर्वाङ्गोपसंहृतस्यैव तस्य फलवत्त्वात् ।

न्यायविदस्तु । काम्येऽपि अनन्यगतिकत्वमिति विशेषयन्ति । अन्यथा दैवान्मलमासे वृष्टिनिरोधे सस्यग्लानिभयात्कारीरीष्टिर्न स्यादिति ॥१६६॥१६७॥

परिशेषात् सिद्धार्थमनुवदति ।

**अतएव न सोमेज्या वसन्तेऽपि मलिम्लुचे ।**
**नित्याऽप्येषा न तत्र स्यात् सम्भवात् शुद्धपर्वणः ॥१६८॥**

नित्येति† । अत एव कालदोषस्य सगतिकनित्यनैमित्तिक-

* तत्रान्यगतिकं नित्यं, — इति ग॰ पुस्तकपाठो न समीचीनः ।
† इत्थमेव पाठः सर्व्वत्र । अतएवेति, — इति तु भवितुमुचितम् ।

कर्मणामधिकारविघातदर्शनादेव हेतोः। गतिमेवाह । सम्भवा-
दिति ॥१६८॥

सोमपदस्योपलक्षणत्वमाह ।

एवमन्यानि कर्माणि नित्यान्यपि मलिम्लुचे ।
पश्विज्याग्रयणाधानचातुर्मास्यादिकान्यपि ॥ १६९ ॥
न कार्याणि स्वकालस्य शुद्धस्यापि च सम्भवात् ।

एवमिति । यत्र शुद्धकालसम्भवोऽस्ति तानि सर्वाणि उदाहर्त-
व्यानि । तान्येवाह ।

पश्विति । आदिपदात् । सौत्रामण्यादि ॥१६९॥

अन्यत्रापि अमुमेव हेतुं सञ्चरन्नाह ।

महालयाष्टकोत्सर्गोपाकर्माद्यपि कर्म यत् ॥ १७० ॥
स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।
उत्तरस्यापि मासस्य तत्कालस्यैव सम्भवात् ॥ १७१ ॥

महालयेति । आदिपदाच्छ्रवणाकर्मादि । यत् स्पष्टमासविशे-
षेणाभिहितं तन्मले वर्जयेत् ।

उत्तरमासि कृतञ्चेत् तत्रैव कृतं भवतीत्यभिप्रायः । अतः सग-
तिकम् ॥१७०॥१७१॥

एवमेव मासिकेष्वपीत्याह ।

प्रतिमासं मासिकानि कुर्वन् प्राप्ते मलिम्लुचे ।
मासिकं नैव कुर्वीत कुर्यादुत्तरमासि तत् ॥ १७२ ॥



प्रतिमासमिति ॥१७२॥

अगतिकान्याह ।

पार्वणेऽग्निहोत्रे च मासि श्राद्धं पितृक्रतुः ।
सन्ध्या पञ्च महायज्ञा देवताऽतिथिपूजनम् ॥ १७३ ॥
प्रेते मात्रादिमारभ्य* श्राद्धपिण्डोदकक्रिया ।
सपिण्डीकरणान्ताश्च यथाकालमुपस्थिताः ॥ १७४ ॥
तीर्थस्नानजपश्राद्धं पिण्डदानञ्च तर्पणम् ।
यवव्रीहितिलैर्होमो जातकर्मादिकाः क्रियाः ॥१७५॥
चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् ।
मघात्रयोदशीश्राद्धमित्यादीनि बहून्यपि ॥ १७६ ॥
प्रत्युपस्थितहेतूनि समाम्नातानि मलिम्लुचे ।
अनन्यगतिकत्वेन कर्त्तव्यान्यधिकेऽपि च † ॥१७७॥

पार्वणेत्यादिना। पार्वणेष्टिर्दर्शपूर्णमासौ। मासि श्राद्धं दर्श-
श्राद्धम् । पितृक्रतुः पिण्डपितृयज्ञः। प्रेते प्रेतनिमित्तं दाहा-
दारभ्य ।

सपिण्डीकरणान्ताः, तीर्थस्नानं मलमासात् पूर्वमेव प्रस्थितस्य,
जपादीनि तीर्थनिमित्तान्येव। जातकर्मादिसंस्काराः चूडान्ताः। स्नान-

---

* इत्थमेव पाठः सर्व्वत्र । दाहादिमारभ्य, – इति तु पाठः टीकासम्मत-
इति प्रतिभाति ।

† कर्त्तव्यमधिकेऽपि च,–इति क॰ पुस्तके पाठः ।

द्वारागादीनि ग्रहणनिमित्तान्येव* । आदिपदादलभ्ययोगानि अर्धोदयकपिलाषष्ठीप्रभृतीनि, प्रत्युपस्थिता प्राप्तिहेतवो निमित्तानि उपरागादीनि येषां, एतादृशानि बहूनि अधिकेऽपि तानि कर्त्तव्यानि। एतेषामगतिकत्वमेव हेतुरित्याह । अनन्यगतिकेति। स्पष्टम् ॥१७३॥ ॥१७४॥१७५॥१७६॥१७७॥

आब्दिकश्राद्धे विशेषमाह ।

**आब्दिकं नाम यच्छ्राद्धं मलमासे न दुष्यति ।**
**मलमासप्रमीतानामन्येषामुत्तरत्र तु ॥ १७८ ॥**

आब्दिकमिति । अन्येषां शुद्धमासमृतानाम् । इदं प्रथमाब्दिकातिरिक्तविषयम् । तदुक्तं स्मृत्यन्तरे ।

"आब्दिकं प्रथमं यत्स्यात् तत् कुर्वीत मलिम्लुचे ।
चतुर्दशे तु सम्प्राप्ते कुर्वीत पुनराब्दिकम्" ॥ इति ॥

अस्यार्थः । पुनराब्दिकं द्वितीयादिवार्षिकं त्रयोदशे मासेऽतीते चतुर्दशमासादिने† कुर्यात् ॥१७८॥

अथाभ्युदयिकश्राद्धनिषेधव्यापारेणैतत्प्रयोजकानि कर्माणि न कार्याणीति लाघवार्थमाह ।

**न स्यादाभ्युदयश्राद्धं विना जन्मनिमित्तकम् ।**
**गर्भे वार्धुषिके भृत्ये नाधिमासं विवर्जयेत् ॥ १७९ ॥**

न स्यादिति । निषेधस्य प्राप्तिपूर्वकत्वात् यानि माङ्गल्यकार्याणि

* चूडान्तात् प्राशनादीनि, — इति ख॰ पुस्तके पाठः।
† इत्थमेव पाठः सर्वत्र ।



गृहप्रवेशविवाहादीनि तत्प्रापकाणि, तानि न स्युरिति भावः । अगतिकनैमित्तिकन्तु भवतीत्याह । विनेति । जन्मनिमित्तं पुत्रजन्मायुक्तं प्रधानरूपं, तद्वर्जयित्वा । न [illegible] जातकर्माङ्गं, न सोष्यन्तीजातकर्मेत्यादिना कात्यायनेन* निषेधात् । अगतिकतया प्राप्तानां गर्भाधानादिसंस्काराणां अङ्गत्वेन प्राप्तस्य श्राद्धं नैव बाधितुमिष्टम् । अबाधेनोपपत्तौ बाधायोगात् । प्रधानं नीयमानमङ्गान्यपकर्षयतीति† न्यायात् । लौकिककर्मणि गर्भकर्मणि च मलमासनिषेधो नास्तीत्याह । गर्भ इति । वार्धुषिकं वृद्धिकर्म । भृत्ये वेतनादौ ॥१७९॥

इदानीं दर्वीहोमो गृह्यकर्माणि पश्वादिप्रभृतीनि च मले कार्याणीत्याह ।

**वषट्कारं विना होमा ये भवन्तीह केचन।**
**ते सर्वे मलमासेऽपि कर्त्तुं युक्ता इति श्रुतिः ॥ १८०॥**

वषट्कारमिति। अगतिकनित्यत्वेन प्राप्तिसिद्धावपि पुनर्वचनं प्रपञ्चार्थम् । न तु वषट्कारवद्यागनिषेधार्थम् । श्रुतिग्रहणं विस्रम्भार्थम् ॥१८०॥

नित्यानामपि प्रथमारम्भो मलमासे न भवतीत्याह ।

**आधानानन्तरं पूर्णमासी चेन्मलमासगा ।**
**तस्यामारम्भणीयादीन कुर्वीत कदाचन ॥ १८१ ॥**

* न तु जातकर्माङ्गं सोष्यन्तीमित्यादिना विहितजातकर्माङ्गतं — इति क॰ ख॰ घ॰ पुस्तकेषु पाठः ।
† अङ्गान्यपकर्षतीति, — इति ङ॰ पुस्तके पाठः ।

आधानेति । आरम्भणीया अन्वारम्भणीया । आदिशब्देन दर्शपूर्णमासौ । यच्च प्रयोगपारिजाते गर्गवचनम् ।

"नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ।
अतिपाते सति तयोः प्रशस्ते मासिपुष्यभे" * इति ॥

तथापि याज्ञिकाः,—

"आरम्भं दर्शपूर्णाख्योरग्निहोत्रस्य चादिमम् ।
प्रतिष्ठाः पञ्च कूर्माद्या मलमासे विसर्जयेत्" ॥

तथा,

"उपरागोऽधिमासश्च यदि प्रथमपर्वणि ।
तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते ॥
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा" ।

इत्यादिवचनवाक्येभ्यः,—

तथा, नामकरणप्रकरणे,

"व्यतीपाते च सङ्क्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः ॥
अमासङ्क्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत्" ।

इति गर्गवचनाच्च मलमासाद्यवरुद्धपौर्णमास्यां प्रथमपौर्णमासं नानुतिष्ठन्ति । गर्गवचनं पुनराधानविषयत्वेन नेयम् ।

वस्तुतस्तु दर्शेष्टिरित्यपपाठ एव । नामकर्म च जातेष्टिरिति क्वाप्यादर्शे दर्शनात् । दर्शपूर्णमासानीजानोदक्षिणाग्निपक्वमित्यस्ति देवयाज्ञिकभाष्ये च । तथाच, सूतकशुक्रास्तमयादिनिमित्तवशाद्

* पुष्यर्क्षे, — इति क० पुस्तके पाठः ।



दर्शपूर्णमासारम्भोत्कर्षे सति आग्रयणकाल आगते तदतिक्रमशङ्कायामयं प्रकार इति । न च सङ्ग्रहवचनान्याशौचादिनाऽतिक्रान्तारम्भविषयाणि, प्रथमपर्वणीति प्रथमपदोपादानात् । प्रथमपर्वणश्चाशौचादिनाऽतिक्रान्तत्वासम्भवात् ॥१८१॥

अगतिकं नैमित्तिकमपि कुर्यादिति प्रागुक्तं, ततो जातेष्टिरपि प्रसक्ता, तदपवादमाह ।

**नैमित्तिक्यपि जातेष्टिर्न कर्त्तव्या मलिम्लुचे ।**
**ऊर्ध्वं पर्वणि * कुर्वीरन्नाशौचरजसी विना ॥ १८२ ॥**

नैमित्तिकीति । ऊर्ध्वं शुद्धमासीत्यर्थः । एवं रजोदोषे इत्यादिवाक्येन नैमित्तिकानुष्ठानप्राप्तौ तन्निषेधति आशौचेति । एतेनेतदुक्तं भवति । याश्च पुरुषोपघातरूपा † जातेष्टिग्रामवत्यादयः ताः शुद्धे पर्वणि भवन्ति । याश्च कर्मोपघातरूपा ‡ भातपत्यादयो नैमित्तिक्यस्तास्तत्कालं शुद्धकालान्तरानादरेण § मलमासे आशौचे रजसि वा भवन्ति ॥१८२॥

मले काम्यं न भवतीत्युक्तम् । तत्रारब्धकाम्यं भवतीत्याह ।

**प्रवृत्तं मलमासात् प्राग्यत्काम्यमसमापितम् ।**
**आगते मलमासेऽपि तत्कर्त्तव्यमसंशयम् ॥ १८३ ॥**

* ऊर्द्ध्वपर्व्वणि, — इति ख० पुस्तके पाठः ।
† पुरुषोपपातरूपा, — इति ङ० पुस्तके पाठः ।
‡ कर्मोपपातरूपा, — इति ङ० पुस्तके पाठः ।
§ शुद्धकालानादरेण, — इति क० ख० ध० पुस्तकेषु पाठः ।

प्रक्रान्तमिति । स्पष्टम् ॥१८३॥

अगतिकमप्याग्रयणं सङ्कटे मलमासादौ कार्यमित्याह ।

पुराणधान्यशून्यत्वे क्षुद्बाधे समुपस्थिते ।
श्यामाकैर्मलमासेऽपि कृत्वाऽऽग्रयणमातुरः ॥ १८४ ॥
नवम्भुक्ता यथाकालं व्रीह्याग्रयणमाचरेत् ।

पुराणेति । उपलक्षणार्थमिदं व्रीहिश्यामाकपरम् । न्यायतौल्यात् ॥१८४॥

प्रसङ्गादिदमुक्त्वा प्रकृतार्थमुपसंहरति ।

दैवात्सोमेन नैवेष्टं प्राग्वसन्तान्न्यपर्वणः ॥ १८५ ॥
शिष्टं पर्वैकमेवाच तथापि * मलदूषितम् ।
तत्र सोममखो नैव कार्यो नित्योऽपि सन्नयम् ॥ १८६॥
यागलोपप्रसक्तावप्युदक्यादिमखे यथा † ।

दैवादिति । दैवान्मानुषाद्वा प्रतिबन्धाद्वसन्तात्पर्वणः प्राक् सोमेन नेष्टं अन्यपर्व च मलमासगतञ्चेत्, तथापि वसन्ताभावादगतिकोऽनित्योऽपि सन् सोमो न भवति । किन्तु वसन्तं विनाऽप्युदगयने कार्यः । तथाप्यसम्भवेन लोपप्रसक्तावपि मलमासे न भवति ॥१८५॥ ॥१८६॥

एतदेव दृष्टान्तेन दृढयति ।

* तथापि, – इति क० ख० पुस्तकयोः पाठः ।

† तथा, – इति क० ख० पुस्तकयोः पाठः ।



उदक्यादीति । यथा पत्न्युदक्यादिकमधिकारविघातकं तथा मलोऽपीति भावः । आदिपदात् सूतकादि ।

प्रकरणार्थमुपसंहरति ।

एवमुद्देशतः सारमधिकारस्य भाषितम् ॥ १८७ ॥
विचिन्त्य * कथयिष्यामि तत्तत्प्रकरणे स्फुटम् ।

एवमिति । उद्देशतः सङ्क्षेपेण । सारं श्रुतिसम्मतं निष्कृष्टभूतं बह्वादिसम्मतप्रमेयं अधिकारस्य भाषितं निरूपितम् । न्यूनत्वशङ्कापरिहारार्थमाह । विचिन्त्येति । स्फुटं विशदं विशेषाकारेणेत्यर्थः ॥ १८७॥

अधिकारप्रकरणसमाप्तिं शिष्यावधानाय दर्शयति ।

इति श्रीवादि † मुद्गरकुठारकुमारस्वामिसूरिसुत-त्रिकाण्डमण्डनभास्करमिश्रसोमयाजिकृतापस्तम्बसूत्रध्वनितार्थकारिकासु सोमयागोपोद्घाते अधिकारिनिरूपणं ‡ समाप्तम् ॥

इतीति । वादिनः पूर्वपक्षिणः । तेषां भङ्गुरत्वादिरूपेण तादूप्यरूपकं मुद्गरेति । स्वोक्तिभिः सिद्धान्तकथनद्वारा पूर्वपक्ष-

* विचित्य,–इति क० पुस्तके पाठः ।

† वादिभट्ट,–इति ग० पुस्तके पाठः ।

‡ सोमयाजिकृतौ अधिकारनिरूपणं,–इत्येतावन्मात्रं ग० पुस्तके पाठः ।

निराकरणेन मुद्गरत्वं कुठारत्वञ्चारोपितम् । त्रीणि च तानि काण्डानि च त्रिकाण्डानि ।

इति श्रीत्रिकाण्डमण्डनकारिकाविवरणे प्रथममधिकारिकाण्डं समाप्तम् ॥

---



## श्रीगणेशाय नमः ।

*शिष्टस्याभावतस्तुल्यं द्रव्यं प्रतिनिधीयते ।
यावद्यावत्सुसदृशं तत्तदेव हि गृह्यते ॥ १ ॥
*काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः ।

---

* आदितः पञ्चदशकारिकाणां व्याख्या व्याख्यायुक्तपुस्तकेषु नोपलभ्यते । एकस्मिन् व्याख्यायुक्तपुस्तके मूलपुस्तके च कारिकाः पठ्यन्ते । एतासां व्याख्याग्रन्थः कालवशात् प्रलीन इति सम्भाव्यते । अर्थावगतये मयैतासां सङ्क्षिप्ता व्याख्या विरच्य लिख्यते ।

कालदोषादिवद्द्रव्याभावोऽप्यधिकारविघातको न वेति सन्देहापनयाय प्रतिनिधिप्रकरणमारभते । शिष्टस्येति । शिष्टस्य शास्त्रविहितस्य द्रव्यस्य अभावतोऽभावे । शिष्टाभावस्य प्रतिनिध्युपादानहेतुत्वाद्वा पञ्चम्यास्तसिल् । न खलु शिष्टस्य भावे प्रतिनिधिरुपादीयते । तुल्यमित्यत्रापि शिष्टस्येत्यनुषञ्जनीयम् । तथाच श्रुतद्रव्यापचारे तत्तुल्यं द्रव्यान्तरं प्रतिनिधातव्यमित्यर्थः सिध्यति । तुल्यत्वस्य येन केनापि धर्म्मेण सम्भवाद्विशिनष्टि यावदित्युत्तरार्द्धेन । सौसादृश्यस्य पुनरसम्भवे येन केनचित् सादृश्येनापि प्रतिनिधिग्रहणं वक्ष्यते ॥ १ ॥

* सर्व्वत्राविशेषेण प्रतिनिधिग्रहणे प्राप्ते विशेषमाह । काम्ये इति । हि यस्मात् नित्ये नैमित्तिके च स प्रतिनिधिस्तस्मात् काम्ये प्रतिनिधिर्नास्ति । नित्यनैमित्तिकयोरकरणे प्रत्यवायोपदेशात् प्रतिनिधिनाऽपि तयोः

काम्येऽप्युपक्रमादूर्ध्वमन्ये प्रतिनिधिं विदुः ॥ २ ॥
*न स्यात् प्रतिनिधिर्मन्त्रे देवेऽग्नौ* कर्मणीश्वरे ।
न च प्रतिनिधिर्देशकालयोरित्यथापरे ॥ ३ ॥
*नाभावस्य प्रतिनिधिरभावान्तरमिष्यते ।
नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित् ॥ ४ ॥
*श्रोत्रियाणामभोज्यं यत् द्रव्यं हि तद्विशेषतः ।
ग्राह्यं प्रतिनिधित्वेन होमकार्येषु न क्वचित् ॥ ५ ॥

---

* दैवेऽग्नौ, — इति ग० पुस्तके पाठः ।

---

करणं, काम्यस्य त्वकरणे प्रत्यवायाभावात् मुख्यद्रव्येणैव तदनुष्ठानमिति भावः । मतान्तरमाह । काम्येऽपीति । उपक्रमादारम्भात् । ऊर्द्ध्वं परतः । प्रारब्धकाम्यकर्म्मणोऽपि समापनस्यावश्यकत्वादारम्भात् परतः मुख्यद्रव्यापचारे तत्रापि प्रतिनिधिरुपादेयः । नित्यनैमित्तिकसमानन्यायत्वादित्याशयः । तदिदं वाक्यं द्रव्यप्रतिनिधिपरमित्यनुसन्धेयम् ॥ २ ॥

* सर्व्वत्राविशेषेण प्रतिनिधिप्राप्तौ विशेषमाह । न स्यादिति । मन्त्र इषे त्वेत्यादिः । देव इन्द्रादिः । अग्निराहवनीयादिः । कर्म्म प्रयाजादि । ईश्वरः स्वामी । एषु प्रतिनिधिर्नेत्यर्थः । युक्तयस्त्वत्र मीमांसाषष्ठाध्यायादवगन्तव्याः । विस्तरभयान्न प्रस्तूयन्ते । एवमन्यत्रापि । देशः प्राचीनप्रवणत्वादिः । कालः सायमादिः । अपरे इति ब्रुवन् मतान्तरे तयोः प्रतिनिध्यभ्यनुज्ञानं सूचयति । सायमादिकालातिपातेऽपि गौणकाले सायं होमादेः करणस्य तत्र तत्रोपदिष्टत्वादिति भावः ॥ ३ ॥

* नाभावस्येति । सोमाद्यभावे सत्यपि अभावान्तरमभावान्तरस्य न प्रतिनिधिः । स्पष्टमन्यत् ॥ ४ ॥

* उदाहरणार्थमाह । श्रोत्रियाणामिति । स्पष्टम् ॥ ५ ॥



*सत्रेषु स्वामिनि प्रेते कर्त्तृसङ्ख्याप्रसिद्धये ।
पुमान् प्रतिनिधातव्यो नासौ स्वामी कथञ्चन ॥ ६ ॥
*यद्येकयजमानेऽपि पत्युः कर्मण्यशक्तता ।
ग्राह्योऽन्योगुणकर्मार्थं नरः कात्यायनाशयात् ॥ ७ ॥
*सौवर्णी कुशपत्नी वा* पत्न्यभावेऽग्निहोत्रिणः ।
पत्युः प्रतिनिधिं कृत्वा पत्नी नैवं समाचरेत् ॥ ८ ॥

---

* सौवर्णकुशपत्नी वा, — इति ग० पुस्तके पाठः ।

---

* सत्रेष्विति । सत्राणि यागविशेषाः । तत्पदार्थास्तु सप्तदशावरैः कर्त्तव्याः । तत्र कस्मिंश्चित् स्वामिनि प्रेते सति सप्तदशत्वसङ्ख्याप्रसिद्ध्यर्थमपरः पुमान् प्रतिनिधातव्यः । इतरथा खल्वेकं कार्य्यं लुप्येत । षोडशैव तु कार्य्याणि सम्पद्येरन् । यश्च प्रतिनिहितः नासौ स्वामी । स्वामीति फलस्य भोक्तारमाचक्षते । केवलं ऋत्विक्कर्म्मार्थमेव प्रतिनिधेयः इति भावः ॥ ६ ॥

* यदेति । एको यजमानो यस्मिन् तथाविधेऽपि यागे पत्युः स्वामिनो यजमानस्येत्येतत् । कर्म्मणि सपरिकरेऽशक्तता तदनुष्ठानासामर्थ्यं यदा भवति, तदा गुणकर्म्मार्थमङ्गकर्म्मानुष्ठानार्थमन्यो नरः प्रतिनिधेयः । प्रधानन्तु त्यागमात्रं यजमान एव कुर्य्यादिति भावः ॥ ७ ॥

* सौवर्णीति । अग्निहोत्रिणः पत्न्यपचारे पत्नीप्रतिनिधितया सौवर्णीं कुशमयीं वा पत्नीमुपादायाग्निहोत्रं कर्त्तव्यम् । पत्न्या तु पत्युः प्रतिनिधिमादाय न होतव्यम् । पत्युः प्राधान्यात् । प्रमाणाभावाच्च । पत्न्याः प्रतिनिधिश्च छन्दोगपरिशिष्टे कात्यायनेनोपदिष्टः । यथा, "मृतायामपि भार्य्यायां वैदिकाग्निं न हि त्यजेत् । उपाधिनाऽपि तत् कर्म्म यावज्जीवं समाचरेत् । रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम् । ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरच्युतः" इति ॥ ८ ॥

*स्याद्दर्शपौर्णमासेष्टौ चतुर्णामृत्विजां क्रिया ।
चत्वारश्चेन्न लभ्यन्ते त्रयः कुर्युस्त्रयोऽपि चेत् ॥ ९ ॥
सम्भवन्ति न, कुर्यातां द्वावेवेष्टिं कथञ्चन ।
यदि द्वावपि न स्यातामेकेनाप्यृत्विजा सह ॥ १० ॥
यजमानः प्रयुञ्जीत तत्रानाम्नातनिष्कृतिः ।
यद्येकाकी पतिः कुर्यात् स्याद्बौधायननिष्कृतिः ॥ ११ ॥
*ऋत्विजामुक्तसङ्ख्योक्तगुणानाञ्चेदसम्भवः ।
उपेक्ष्यापि गुणान् कामान् सङ्ख्योपादानमिष्यते ॥ १२ ॥
*पतितं वेदशून्यञ्चेद्विना सङ्ख्या न पूर्यते ।
तत्र सङ्ख्यां विहायापि गुणिनामेव सङ्ग्रहः ॥ १३ ॥

---

* दर्शादौ यथोक्तसङ्ख्यानामृत्विजामसम्भवे यत् कर्त्तव्यं तदाह । स्याद्दर्शेत्यादि त्रिभिः । स्पष्टम् ॥ ९ ॥ १० ॥ ११ ॥

* अथ यत्र ऋत्विग्गतसङ्ख्योपादाने तदुक्तगुणानामुपसंग्रहो न भवति, गुणोपसंग्रहे वा सङ्ख्या न पूर्य्यते, तत्र किं सङ्ख्यानुरोधेन गुणा नादरणीयाः अथवा गुणानुरोधेन सङ्ख्यैव नादर्त्तव्या । अस्मिन् संशये निर्णयमाह । ऋत्विजामिति । काम्यन्ते इति कामास्तान् । गुणविशेषणमिदम् । तथा चोभयोपसंहारासम्भवे सङ्ख्याऽऽदरः ॥ १२ ॥

* सङ्ख्यानुरोधेन गुणोपेक्षावद्दोषोपादानमपि स्यादित्याशङ्कायामाह । पतितमिति । पातित्यस्याधिकारविघातकत्वाद्वेदशून्यस्य च कर्म्मानुष्ठानस्यैवासम्भवादिति भावः ॥ १३ ॥



*अतएव च सोमादौ षोडशर्त्विगसम्भवे ।
अल्पीयांसोऽपि तत्सर्वं कर्म कुर्युर्हि तादृशम् ॥ १४ ॥
*कौषीतकिभिराम्नातं कैश्चित् छन्दोगबह्वृचैः ।
तावतामेव सर्वाऽपि दक्षिणा वरणानि च ॥ १५ ॥

अथेदं विचार्यते । व्रीहिभिर्यजेत यवैर्यजेत,—इति विकल्पेन विहितेषूभयेषु मध्ये एकेन व्रीहिद्रव्येण प्रारब्धे कर्मणि तस्य नाशदोषापहारादिके जाते पश्चाद्यदि व्रीहयो न प्राप्यन्ते, तदा किं वैकल्पिकं द्रव्यान्तरं यवरूपमुपादेयमुत व्रीहिसदृशमिति । तत्र मुख्यद्रव्ये सति प्रतिनिध्युपादानस्यायुक्तत्वाद्यवानामुपादाने प्राप्ते सिद्धान्तमाह ।

द्रव्यं वैकल्पिकं किञ्चित् यत्र सङ्कल्पितं भवेत् ।
तदभावे* सदृग्ग्राह्यं न तु वैकल्पिकान्तरम् ॥ १६ ॥

द्रव्यमिति । सदृगिति । व्रीहिसदृशं नीवारादि । न तु

---

* तदलाभे, — इति ग० पुस्तके पाठः ।

---

* अतएवेति । यतः सङ्ख्यानुरोधेनापि पतितादयो नोपादेयाः अतएवेत्यर्थः । तत्सर्व्वमिति षोडशर्त्विक्सम्पाद्यं सर्व्वमित्यर्थः ॥ १४ ॥

* यदा त्वल्पीयांस एवर्त्विजः सर्व्वं कर्म्म कुर्व्वन्ति, तदा दक्षिणा वरणञ्च तेषां सङ्ख्यानुसारेण भवति, उत तावतामेव सर्व्वा दक्षिणा सर्व्वाणि च वरणानीत्याकाङ्क्षायां निर्णयमाह । कौषीतकिभिरिति । कैश्चिदिति, तेषां कस्याञ्चिच्छाखायामित्यर्थः ॥ १५ ॥

यवाः । तेन प्रारब्धप्रयोगस्य द्रव्यस्याभावे तत्सदृशमुपादेयं न तु वैकल्पिकमिति । यथारब्धसमापनस्योचितत्वात् । द्रव्यान्तरे चोपचिते तथा न स्यादिति ॥ १६ ॥

यदा पुनर्मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितेनान्तरा-मुख्यं लब्धं तदा प्रतिनिधेः सङ्कल्पितत्वात् मिथ्यासङ्कल्पदोषपरिहा-राय मुख्यमनादृत्य प्रतिनिधिरेवोपादेय इति प्राप्ते सिद्धान्तयति ।

**मुख्यद्रव्यापचारे तत्प्रतिनिध्यभिसन्धिना* ।**
**प्रयुञ्जानस्य मुख्यार्थलाभे ग्राह्यः स एव हि ॥ १७ ॥**

मुख्यद्रव्येति । अपचारोऽलाभः । अभिसन्धिः सङ्कल्पः । स मुख्यार्थः । तदुक्तं जैमिनिना । "मुख्याधिगमे मुख्यमागमो हि तदभावात् । मी० ६ अ० ३ पा० ३ ५ सू०"—इति । यथाशक्ति शास्त्रार्थं सम्पादयामीत्येवं शास्त्रार्थविषय एव सङ्कल्पः कर्त्तव्यो-न तु प्रतिनिधिस्वरूपं कथितव्यम् । तस्मात् मुख्यप्राप्तौ मुख्यमे-वोपादेयम् ॥ १७ ॥

अथ यदाकदाचित्प्रतिनिधिना नियोजने कृते पश्चान्मुख्यमुप-लब्धं तदा कृतमपि नियोजनं बाहुल्याय पुनः खदिरे कर्त्तव्यमिति मन्वानस्योत्तरमाह ।

**उपात्ते यस्मिन् कस्मिन् वा मुख्येऽपचरिते सति ।**
**अन्यद्रव्यं सजातीयं विजातीयमथापि वा ॥ १८ ॥**

---

* मुख्यद्रव्यापचारे तु प्रतिनिध्यभिसन्धिना, – इति ग० पुस्तके पाठः ।

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 928.




# त्रिकाण्डमण्डनम् ।

# TRIKĀṆḌA-MAṆḌANAM

BY

BHĀSKARA-MIÇRA, SOMA-YĀJĪ

BEING

AN EXPOSITION OF THE SOMA-YĀGA APHORISMS OF ĀPASTAMBA.

WITH AN

ANONYMOUS COMMENTARY ENTITLED VIVARAṆA

EDITED BY

MAHĀMAHOPĀDHYĀYA CANDRAKĀNTA TARKALAṄKĀRA.

FASCICULUS II.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1898.

Nyayabinduṭīkā, (Text) ... ... ... ... Rs. 0 10
Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-3 @ /6/ each ... ... ... ... ... 3 6
Padumawati Fasc. I and 2 @ 2 ... ... ... ... 4 0
Pariçista Parvan, (Text) Fasc. 1-5 @ /6/ each ... ... ... ... 1 14
Prithivirāj Rāsa, (Text) Part I, Fasc. 1, Part II, Fasc. 1-5 @ /6/ each ... 2 4
Ditto (English) Part II, Fasc. 1 ... ... ... 0 12
Prākṛta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... 1 8
Parāçara Smṛti, (Text) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-5 @ /6/ each ... ... ... ... 7 2
Parāçara, Institutes of (English) ... ... ... ... 0 12
*Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8, @ /6/ each Fasc. ... ... ... 12 6
Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1-4 @ /6/ each ... ... ... 1 8
Ditto (English) Fasc. 1-3 @ /12/ each ... ... ... 2 4
Suçruta Saṁhitā, (Eng.) Fasc. 1 @ /12/ ... ... ... 0 12
*Taittereya Saṁhitā, (Text) Fasc. 9-42 @ /6/ each ... ... ... 12 12
Tāṇḍya Brāhmaṇa, (Text) Fasc. 1-19 @ /6/ each ... ... ... 7 2
Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-6 @ /6/ each ... ... ... ... 12 6
Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1 & 2 @ /6/ ... ... ... 0 12
Tul'si Sat'sai, (Text) Fasc. 1-5 @ /6/ each ... ... ... 1 14
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ /12/ ... ... ... 4 8
Varāha Purāṇa, (Text) Fasc. 1-14 @ /6/ each ... ... ... 5 4
*Vāyu Purāṇa, (Text) Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /6/ each ... ... ... ... ... ... 4 8
Viṣṇu Smṛti, (Text) Fasc. 1-2 @ /6/ each ... ... ... 0 12
Vivādaratnākara, (Text) Fasc. 1-7 @ /6/ each ... ... ... 2 10
Vṛhannāradiya Purāṇa, (Text) Fasc. 1-6 @ /6/ ... ... ... 2 4
Vṛhat Svayambhū Purāṇa, Fasc. I to V ... ... ... 1 14

*Tibetan Series.*

Pag-Sam Thi S'iñ, Fasc. 1-4 @ 1/ each ... ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1 to 3, @ 1/ each ... ... ... ... ... 11 0
Rtogs brjod dpag hkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5 @ 1/ each ... ... ... ... ... 10 0

*Arabic and Persian Series.*

'Alamgirnāmah, with Index, (Text) Fasc. 1-13 @ /6/ each ... ... 4 14
Al-Muqaddasi (English) Vol. I, Fasc. 1 ... ... ... 0 12
Āīn-i-Akbarī, (Text) Fasc. 1-22 @ 1/ each ... ... ... 22 0
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III Fasc. 1-5, @ 1/12/ each ... ... ... 29 12
Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/ each ... ... 37 0
Ditto English Fasc. I & II @ 1/ each ... ... ... 2 0
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 0 6
Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /6/ each ... ... 7 2
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/ each ... ... ... ... ... ... 21 0
Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/ each ... ... 14 0
Fihrist-i-Tūsī, or, Tusy's list of Shy'ah Books, (Text) Fasc. 1-4 @ /12/ each ... ... ... ... ... ... 3 0
Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1-9 @ /6/ each ... ... 3 6
Ditto of Azādī, (Text) Fasc. 1-4 @ /6/ each ... ... 1 8
Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ /12/ each ... ... 4 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /6/ each ... ... 1 2
Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... 38 4
Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10 Index to Vol. I Fasc. X & XI & Index to Vol. III, Fasc. XI & XII Index to Vol. II, Fasc. X, XI & XII @ /6/ each ... ... 13 [illegible]

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, GREAT RUSSELL STREET, LONDON, W. C., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | 1 | 8 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... | 4 | 2 |
| Aitarēya Āraṇyaka of the Ṛg Vēda, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–4 @ /6/ ... | 7 | 2 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5 @ 1/ each ... | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each ... | 1 | 14 |
| Brahma Sūtra, (English) Fasc. 1 ... | 0 | 12 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... | 19 | 14 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 3–14 @ /6/ each ... | 4 | 8 |
| Ditto Āçvalayana (Text) Fasc. 1 to 11 @ /6/ ... | 4 | 2 |
| * Ditto Lāṭyāyana, (Text) Fasc. 4–9 @ /6/ each ... | 2 | 4 |
| Ditto Çānkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... | 1 | 2 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... | 1 | 8 |
| Kāla Viveka, Fasc 1 to 3 ... | 1 | 2 |
| Kātantra, (Tetx) Fasc. 1–6 @ /12/ each ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... | 3 | 6 |
| *Lalita-Vistara, (Text) Fasc. 4–6 @ /6/ each ... | 1 | 2 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... | 4 | 2 |
| Manuṭikā Saṃgraha, (Text) Fasc. 1–3 @ /6/ each ... | 1 | 2 |
| *Mārkaṇḍēya Purāṇa, (Text) Fasc. 4–7 @ /6/ each ... | 1 | 8 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–5 @ /12/ each ... | 3 | 12 |
| *Mimāṃsa Darçana, (Text) Fasc. 7–19 @ /6/ each ... | 4 | 14 |
| Nārada Smṛti, (Text) Fasc. 1–3 @ /6/ ... | 1 | 2 |
| Nyāyavārtika, (Text) Fasc. 1–4 @ /6/ ... | 1 | 8 |
| *Nirukta, (Text); Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each... | 5 | 4 |
| *Nitisāra, or The Elements of Polity, By Kāmandaki, (Sans.) Fasc. 3–5 @ /6/ each ... | 1 | 2 |

| | Rs. | |
|---|---|---|
| Maghâzi of Wāqidi, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each ... | 5 | 10 |
| Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 @ /12/ each ... | 9 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... | 7 | 2 |
| Ma'āṣir-i-'Ālamgirī, (Text), Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... | 0 | 6 |
| Nizāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1 and 2 @ /12/ each | 1 | 8 |
| Riyāẓu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| *Suyūṭy's Itqān, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. 7–10 @ 1/ each ... | 4 | 0 |
| Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Ditto (English) Fasc. 1–14 @ /12/ each ... | 10 | 8 |
| Ditto Index ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each... | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1 & 2 @ 1/8/ each ... | 3 | 0 |
| Wis o Rāmīn, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each ... | 6 | 6 |
| Tuzuk-i-Jahāngiri, (Eng.) Fasc. 1 ... | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | Rs. | |
|---|---|---|---|
| 1. | ASIATIC RESEARCHES. Vol. VII, Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each ... | 50 | 0 |
| 2. | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3. | JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members. | | |

*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

| | | | |
|---|---|---|---|
| 4. | Centenary Review of the Researches of the Society from 1784–1883 ... | 3 | 0 |
| | General Cunningham's Archaeological Survey Report for 1863–64 (Extra No., *J. A. S. B.*, 1864) ... | 2 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J. A. S. B.*, 1868) ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... | 4 | 0 |
| | Introduction to the Maithili Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J. A. S. B.*, 1882) ... | 4 | 0 |
| 5. | Anīs-ul-Musharrahīn ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Iṣṭilāhāt-uṣ-Ṣūfiyah, edited by Dr. A. Sprenger, 8vo. ... | 1 | 0 |
| 9. | Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 10. | Jawāmlu-l-'ilm ir-riyāẓi, 168 pages with 17 plates, 4to. Part 1 ... | 2 | 0 |
| 11. | Khizānatu-l-'ilm ... | 4 | 0 |
| 12. | Mahābhārata, Vols. III and IV, @ 20/ each ... | 40 | 0 |
| 13. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... | 18 | 0 |
| 14. | Sharaya-ool-Islām ... | 4 | 0 |
| 15. | Tibetan Dictionary, by Csoma de Körös ... | 10 | 0 |
| 16. | Ditto Grammar ... | 8 | 0 |
| 17. | Kaçmiraçabdāmṛta, Part I ... | 1 | 8 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1–26 @ 1/ each ... | 26 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

26-9-98.

**Books are supplied by V-P. P.**

उपात्तेति । अत्रोपात्तत्वं पशुनियोजनादिकार्य्याभिनिर्वृत्तिपर्य्यन्तत्वं ग्राह्यं, न ततः प्राक् । तत्र विशेषस्य वक्ष्यमाणत्वात् । कृते नियोजने लब्धोऽपि खदिरो निरर्थक एव* । नियोजनार्थं हि तदुपादानम् । तच्च कृतं गुणानुरोधेन नावर्त्तयितव्यम्† । अतोनादर्त्तव्यः खदिरः । तदुक्तम् । "नानर्थकत्वात् । मी॰ ६अ॰ ३पा॰ ३७सू॰"—इति । यस्मिन् कस्मिन्निति । न्यायप्राप्तप्रतिनिधौ वाचनिके वा । विजातीयमिति । वाचनिकत्वेन मन्दसदृशमपि ॥ १८॥

उपादाय प्रयुञ्जानो यदि पूर्वमवाप्नुयात् ।
उपात्तत्वाविशेषेऽपि पूर्वं हित्वा परं श्रयेत् ॥ १९ ॥

उपात्तत्वस्याविशेष उपात्तत्वसामान्येन न तु कार्य्याभिनिर्वृत्तिरूपेण । तेन च वैलक्षण्यम् । पूर्वं खादिरादि । परं कदरादि । एवं व्रीह्यादिष्वपि द्रष्टव्यम् ॥१९॥

यदा तु प्रतिनिधावुपात्ते तत्क्षणप्रोक्षणपेषणादिसंस्कारकरणोत्तरमपि मुख्यकार्य्योपयोगात् प्राक् मुख्यलाभे तु निर्णयमाह ।

उपात्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते यदि ।
तत्र मुख्यमनादृत्य गौणेनैव समाप्यते‡ ॥ २० ॥

---

* अनर्थक एव, — इति क॰ पुस्तके पाठः ।

† न गुणानुरोधादावर्त्तयितव्यम्, — इति ङ॰ पुस्तके पाठः ।

‡ समापनम्, — इति ङ॰ पुस्तके पाठः ।

उपात्तेति । यथोपात्तत्वं संस्कारकर्मावसानावसायीति शेषम् । ततः प्राक् च पूर्वनिर्णीतत्वात् । इदञ्च गतत्वादाचिन्त्यमिति केचित् ॥ २०॥

अथ व्रीह्यभावे प्रतिनिधित्वेन नीवारैः प्रयोगे प्रारब्धे नीवाराणामपहारादिनाऽभावे सति किं प्रतिनिधीभूतनीवारसदृशमुपादेयं उत मुख्यद्रव्यं व्रीहिरूपन्तत्सदृशं वेति । तत्र यथैव वैकल्पिकेष्वेकस्मिन् प्रवृत्ते तस्यैव तत्प्रयोगाङ्गत्वात्तदपचारे वैकल्पिकान्तरं मुख्यमपि तत्प्रयोगानङ्गत्वान्नोपादीयते । तथैव प्रतिनिधौ प्रवृत्ते तस्यैव तस्मिन् प्रयोगेऽङ्गत्वात् तदपचारे तत्सदृशमेवोपादेयं न तु मुख्यं तत्सदृशं वा तस्य प्रयोगानङ्गत्वादिति प्राप्ते सिद्धान्तमाह ।

**मुख्याभावे यदा गौणमुपात्तं सद्विनश्यति ।**
**तत्र मुख्योपमं गौणं ग्राह्यं गौणोपमं न तु ॥ २१ ॥**

मुख्याभावेति । प्रतिनिधौ नीवारे विनष्टे मुख्यलाभे मुख्यमेव ग्राह्यं, तदलाभे नीवारभिन्नं व्रीहिसदृशमेवेति न तु कदाचिन्नीवारसदृशमित्यर्थः । न हि नीवाराणामङ्गत्वमस्ति । श्रुतिलिङ्गादिप्रमाणाभावात् ॥२१॥

यदा पुनरल्पशकलपरिमाणाय* शेषकार्येभ्यश्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयोऽल्पेऽपि लभ्यन्ते, तदा तैरेव पुरोडाशः कर्त्तव्य उत नीवारैरिति संशयः । तत्राल्पशकलपरिमाणस्य

* परिमाणस्य, — इति क॰ पुस्तके पाठः ।



भूयसां शेषकार्याणां चानुग्रहाय व्रीहिशास्त्रमेकं* बाधितव्यम् । किञ्च प्रतिनिध्युपादाने तस्य नात्यन्तबाधोऽपि । व्रीह्युपादाने हि शेषकार्याणामत्यन्तलोपः स्यात् । अतो नीवारा एवोपादेया इति पूर्वपक्षे प्राप्ते सिद्धान्तमाह ।

**संस्काराणामयोग्योऽपि मुख्य एव हि गृह्यते ।**
**न तु संस्कारयोग्योऽन्यो गृह्यते प्रतिरूपकः ॥ २२ ॥**
**द्यवत्तमात्रपर्याप्तव्रीहिद्रव्यस्य सम्भवे ।**
**पुरोडाशमहत्त्वार्थं न नीवारपरिग्रहः ॥ २३ ॥**

संस्कारेति द्वाभ्याम् । संस्कारास्तक्षणमहत्त्वादयः । अयोग्यत्वञ्चाल्पतया । अन्यो नीवारकदरादिः ॥२२॥२३॥

यदा तु प्रधानयागाक्षमा व्रीहयो लभ्यन्ते, तथापि पूर्ववत्प्रतिनिध्यनुपादानशङ्कां परिहरति ।

**मुख्ये कार्यासमर्थे तु लब्धेऽप्येतस्य नादरः ।**
**प्रतिरूपमुपादाय शक्तान्तेन प्रयुज्यते† ॥ २४ ॥**

मुख्येति । एतस्य मुख्यस्य । शक्तं समर्थम् । प्रतिरूपं प्रतिनिधिम् । अनादरोऽग्रहणम् ॥२४॥

अथ यत्र द्रव्यगुणविरोधस्तत्र कथम्‡ । तद्यथा । नैर्ऋतः

* व्रीहिशास्त्रं, — इति क॰ पुस्तके पाठः ।

† शक्तमेवोपयुज्यते, — इति ग्रन्थान्तरीयः पाठः ।

‡ अथ यत्र गुणद्रव्ययोर्विरोधस्तत्र कथम्, — इति ख॰ पुस्तके पाठः ।

परिहत्ये* कृष्णव्रीहीणां नखैर्भिन्नानामिति । तत्र संशयः । ये व्रीहयः सन्ति मुख्यास्ते अकृष्णाः । ये च नीवारास्ते कृष्णाः । तत्र किं मुख्यद्रव्यमनादृत्य गुणानुरोधेन नीवारोपादानं उत कृष्णं गुणमनादृत्य मुख्यद्रव्यं व्रीहय इति । तत्र व्रीहीणामुपादाने कृष्ण-गुणहानिः सर्वथा, नीवाराणामुपादाने तस्यानुपहो व्रीहिशास्त्र-मपि किञ्चिन्न्यूनं सम्पादितं भवति । अतः कृष्णानां नीवाराणा-मुपादाने प्राप्ते आह ।

**कृष्णव्रीह्यादिके द्रव्ये शिष्टेऽपचरिते सति ।**
**ग्राह्योऽकृष्णोऽपि सन् व्रीहिर्नाव्रीहिः कृष्णगुण्यपि॥२५॥**

कृष्णेति । अपचरितं अभावः । अव्रीहिर्नीवारादिः ॥२५॥

अथ मुख्यद्रव्यालाभे सुसदृशं ग्राह्यमिति प्राक् प्रपञ्चितम् । तत्र सुसदृशलाभे मन्दसदृशं न ग्राह्यम् । तदलाभे तु मन्दसदृशमपि । क्वचित्तु सुसदृशलाभेऽपि वचनान्मन्दसदृशमपि गृह्यते यथा पूतिकाः । तयोभयोः परिज्ञानार्थमाह ।

**कायरूपैस्तथावर्णैः क्षीरैः पुष्पैः फलैरपि ।**
**गन्धैरसैः सदृग् ग्राह्यं पूर्वाभावे† परम्परम् ॥ २६ ॥**

कार्यैरिति । यत्र बहुधर्माणां सम्भवस्तत्र सुसदृशत्वमन्यत्र मन्द-

* परिहत्यै,— इति ख॰ पुस्तके पाठः ।

† पूर्व्वालाभे, — इति ख॰ पुस्तके पाठः ।



सदृशत्वम् । अथ वा यत्र पूर्वपूर्वधर्मस्थितिः, तत्र सुसदृशत्वमन्यत्र मन्दसदृशत्वम् । अतएवाह । पूर्वेति । पूर्वस्य कार्य्यादिकस्य । परं उत्तरम् । कार्य्यैरिति पुरोडाशादिरूपकार्यनिष्पादकसमान्यैरि-त्यर्थः ॥२६॥

प्रतिनिधौ सुसदृशं ग्राह्यमित्युक्तम् । तच्च रूपादिना ज्ञातव्यम् । तदेव विशदयति ।

**हविर्व्रीहिमयं कार्यं यदा यवमयं भवेत् ।**
**तयोरभावे श्यामाकानीवारा वा हविर्भवेत् ॥ २७ ॥**

हविरिति । यत्र सामान्येन चरुपुरोडाशचोदना, तत्र व्रीहीन् यवान् वा प्रतीयात् । तदाह कात्यायनः । व्रीहीन् यवान्वा हविषीति । यत्र विशेषतोद्रव्यचोदनाऽस्ति तत्र नेदं शास्त्रम्* । यथा, गावेधुकं चरुं निर्वपेदिति । तथा, व्रीहियवालाभे सुसदृशं श्यामाकनीवा-ररूपमेव नान्यत् । अप्रक्रान्तविषयमिदम् । अतस्तदेव ग्राह्यम् ॥२७॥ तस्याप्यलाभे मन्दसदृशमाह ।

**वेणुयवा गोरसं वा कन्दं मूलं फलं जलम् ।**
**सत्यं वा हविरेतेषां यथासम्भवमाहरेत् ॥ २८ ॥**

वेणुयवा इति । गोरसं दधिदुग्धादि । अनिषिद्धं कन्दादि हविः । फलं यज्ञियवृक्षीयम् । जलं वृक्षकषायः । सारो वा । सर्वा-लाभे वाचनिकं प्रतिनिधिमाह । सत्यमिति । सत्यं सत्यभाषणम् । पूर्वाभावे परम्परमित्यस्यानुवृत्त्यर्थमाह । यथेति ॥२८॥

* यत्र विशेषतो द्रव्यचोदना नास्ति तत्रेदं शास्त्रम्, — इति क॰ पुस्तके पाठः ।

ईषदपि सादृश्याभावेन प्रतिनिध्यसंभवादाह ।

**प्रतिनिध्यन्तरं सत्यं विज्ञेयं हविरत्यये ।**
**प्रधानदेवतोद्देशात् सन्त्यजेत् सत्यमात्मना* ॥ २९ ॥**

प्रतिनिध्यन्तरमिति । वचनात् प्रतिनिधित्वमस्य । अतः प्रतिनिध्यन्तरं वक्ष्यमाणं वाचनिकप्रतिनिधित्वं न तु न्यायप्राप्तम् । सत्यस्य यागसाधनत्वमाह । प्रधानेति । तथाचाग्नयेऽग्नीषोमाभ्यामिदं सत्यं न ममेति प्रयोगः ॥२९॥

वेणुयवादीनामुपलक्षणार्थत्वमाह ।

**अतोऽन्यदपि वा ग्राह्यं सदृशं धान्यमाषकम् ।**
**न ग्राह्याः सर्वदा माषावरटाणुककोद्रवाः† ॥ ३० ॥**

अत इति । अत उक्तेभ्योऽन्यत् । सदृशं मन्दसदृशं । मौद्गं चरुं निर्वपेदिति श्रुतम् । तत्र मुद्गाभावे सुसदृशानां माषाणां प्रतिनिधित्वेन प्राप्ते तदर्थं सुसदृशमपि निषिद्धं न प्रतिनिधेयमित्याह ।

न ग्राह्या इति । सर्वदा सुसदृशालाभे सुसदृशा अपि माषाः मुद्गाभावे न प्रतिनिधेया इति भावः । अयज्ञिया वै माषा अयज्ञिया वरटा इति तेषामयज्ञियत्वकथनेन तन्निषेधात् । तथा, व्रीह्यभावे अणवः कोद्रवाश्चायज्ञियाः न प्रतिनिधेयाः ॥३०॥

---

* सत्यमात्मनः, — इति क० पुस्तके पाठः ।

† न ग्राह्यं सर्वदा माषयवकोदारकोद्रवम्, — इति ग० पुस्तके पाठः ।



प्रकारान्तरेण सुसदृशत्वमुपदेशयितुमाह ।

**यद्वा व्रीहियवाभावे तुषतण्डुलयोगिनीः ।**
**ओषधीः परिगृह्णीयादणुकोद्रववर्जिताः ॥ ३१ ॥**

यद्वेति । तुषतण्डुलवत्त्वेन साधर्म्यं व्रीहियवाभावे ओषधीषु ज्ञातव्यम् । अणुकोद्रवाणान्तु तत्त्वेऽपि निषिद्धत्वान्न प्रतिनिधिग्रहणम् ॥३१॥

अधुना तेष्वेव सुसदृशत्वं प्रकारान्तरेणाह ।

**ग्राम्याणां वा भवेद्ग्राम्यमारण्यानामरण्यजम् ।**
**यवाभावे तु गोधूमास्ततो वेणुयवादयः ॥ ३२ ॥**

ग्राम्याणामिति । उदाहरणार्थमाह । यवाभावेति । यवसमीपद्रव्याभावे । सामीप्यवर्णाकृत्यादिषु सामीप्यं बलवदिति न्यायात् । तस्मात्, यवाभावे व्रीहय एव ग्राह्या इति । गोधूमाभावे वेणुयवाभावे ओषधयः । ग्राम्याणां प्रतिनिधिः ग्राम्यः । आरण्यानामारण्यः । तदभावे तुषतण्डुलयोगिन्य ओषधयः, सामीप्यात् । तस्याभावे गोधूमाः । आकृतिसाम्यात् । तदभावे वेणुयवादयः । जातिसाम्यात् । समीपस्य ग्राम्यत्वे सति चोदनागतयागसाधनत्वम् । क्लृप्तकल्प्ययोः क्लृप्तं बलवदिति न्यायाच्च । एवं च, तुषतण्डुलयोगित्वग्राह्यत्वमप्यनुगृहीतं भवति । प्रपञ्चितञ्चैतदाश्वलायनसूत्रभाष्ये । गोधूमानामहविष्ट्वं चोक्तं स्मृतौ,—

तिलमुद्गादृते शैव्यं सस्ये गोधूमकोद्रवाविति ।

आचारलवणं हौम्यमिति धर्मसूत्रम्। गोधूमानां तु चारणकान्तःपातित्वादहौम्यत्वमिति। शातातपोऽपि,—

"निष्पावाराजमाषाश्च गोधूमाश्चणकास्तथा।
वर्जनीयाः प्रयत्नेन प्रियङ्गु वरटा अपि"—इति॥

यदा तु यवैः प्रक्रान्ते कर्मणि यवानामपहारे तयोरभावे इति पूर्वोक्तवचनाच्छ्यामाकादीनां गौणद्रव्यतया प्राप्तौ तत्परिहारार्थमिदं वचनम्। ग्राम्याभावे आरण्यायाश्च इत्यत आह। तत इति। ततश्चारण्यग्राम्याणामित्युक्तं भवति॥३२॥

फलं याज्ञिकवृक्षस्य तत्पत्रमथवा * जलम्।
छन्दोगगृह्यवचनाज्जुहुयाद्धविरत्यये॥ ३३॥

फलजलयोर्होमसाधनत्वमुक्तम्। एतदेव निर्वक्ति। छन्दोगेति। यज्ञियवृक्ष उदुम्बरादिः, तत्फलम्। जलं तत्कषायः॥३३॥

कश्चिच्चेदपि सादृश्याभावे वाचनिकं प्रतिनिधिमुदाहरति।

आग्रयणे न लभ्यन्ते श्यामाकाश्चेत्कदाचन।
श्यामाकप्रस्तरस्तत्र कार्यो बौधयनाश्रयात्॥ ३४॥

आग्रयण इति। प्रस्तर इति। प्रकृतेष्टौ श्यामाकपर्णैः प्रस्तरः कार्य इत्यर्थः॥३४॥

यदा त्वग्निहोत्रार्थं पयो न विन्देत, तदाऽपि वाचनिकप्रतिनिधिक्रमेण निर्वहणीयमिति माध्यन्दिनश्रुतिसम्मतक्रममाह।

* तत्फलमथवा,— इति क॰ पुस्तके पाठः।



यद्यग्निहोत्रहोमार्थं पयो न स्यात् कदाचन।
तदा व्रीहियवौ ग्राम्यमौषध्यन्तरमेव वा॥ ३५॥
आरण्यौषधयोवृक्षफलाभ्याप इति क्रमात्।
होमं कर्तुमुपादेयं पूर्वालाभे परम्परम्॥ ३६॥
तेषामलाभे जुहुयाच्छ्रद्धया सत्यमात्मनः।
माध्यन्दिनश्रुतौ सर्वं विस्पष्टमिदमीरितम्॥ ३७॥

यदीति। पूर्वोपात्तक्रमस्य व्रीहियवयोः प्रतिनिधित्वेन विवक्षा, अत्र तु पयस इति न पुनरुक्तिः॥३५॥३६॥३७॥

एकदेशिमतमाह।

मुख्यमेव हविस्तोयं न तु गौणमुपेयते।
पयसा तुल्यकल्पन्तदिति दामोदरोऽब्रवीत्॥ ३८॥

मुख्यमिति। व्रीहियवप्राप्तवत्तुल्यविकल्प इति भावः॥३८॥

मुख्याभावे प्रतिनिधिप्रकारमेकदेशिमतेनाह।

सायं होमो न लभ्यश्चेत् तस्यां रात्रावभोजनम्।
प्रातर्होमो न लभ्यश्चेत्तदहर्भोजनं त्यजेत्॥ ३९॥
तावता होमसिद्धिः स्यात् तत्प्रायश्चित्तमिष्यते।
छन्दोगानां हि केषाञ्चिद् गृह्ये कथितमीदृशम्॥ ४०॥

सायमिति। सायंहोमः सायंहोमसाधनम्। एवं प्रातर्होमसाधनं न लभ्यं चेदुपवासस्य तत्कार्यकारित्वमित्याह। तावतेति। वैश्वान-

रेष्टिवदस्य प्रायश्चित्तरूपत्वमाह । तदिति । एकदेशित्वमस्योपदि-शति । छन्दोगानामिति । गृह्ये गृह्यसूत्रे गौणमादरेण । केषा-श्चिदिति कस्याश्चिच्छाखायामित्यर्थः ॥३९॥४०॥

यथाज्यचोदना, तत्र घृतं प्रतीयते । तदुक्तम् । घृतमाज्ये लिङ्गादिति । तत्र घृताभावे सुवद्द्रव्यमुपादेयमिति पूर्वन्यायतः सिद्धम् । सुवद्द्रव्याणि च मतद्वयेनाह ।

घृताभावे भरद्वाजबौधायनमुनी पृथक् ।
आहतुस्तत्र बौधायनोक्तमादौ वदिष्यते ॥ ४१ ॥

घृताभावे इति । स्पष्टम् ॥४१॥

तदेवाह ।

घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् ।
आजं वा तदलाभे तु साक्षात्तैलं ग्रहीष्यते ॥ ४२ ॥
तिलाभावे ग्रहीतव्यं तैलं जर्तिलसम्भवम्* ।
तदभावेऽतसीस्नेहः कौसुम्भः सर्षपोद्भवः ॥ ४३ ॥

घृतार्थं इति । गोघृतमिमिति । महीनां पय इति लिङ्गात् । तैलमिति साक्षात्तिलस्नेहः । जर्तिला आरण्यतिलाः । अतसी अवसी† ॥४२॥४३॥

---

* तैलजं तिलसम्भवम्, — इति क० पुस्तके पाठः ।

† अवसाः, — इति ख० पुस्तके पाठः ।



वृक्षस्नेहोऽथवा ग्राह्यः पूर्वाभावे परः परः ।
तदभावे यवव्रीहिश्यामाकान्यतमोद्भवम् ॥ ४४ ॥
पिष्टमालोड्य तोयेन घृतार्थे योजयेत् सुधीः ।
वृक्षतैलेषु पुन्नागनिंबैरण्डोद्भवं त्यजेत् ॥ ४५ ॥

वृक्षस्नेहो यज्ञियवृक्षनिर्यासः । तदभाव इति पूर्वोक्ताभावे । वृक्ष-स्नेहस्य यज्ञियत्वविशेषणार्थमाह । वृक्ष इति ॥४४॥४५॥

अस्मिन्नेवार्थे भरद्वाजमतं दर्शयति ।

भरद्वाजोऽन्यथा प्राह घृतप्रतिनिधिं मुनिः ।
गव्याज्याभावतश्छागमहिष्यादेर्घृतं क्रमात् ॥ ४६ ॥
तदभावे गवादीनां क्रमात् क्षीरं विधीयते ।
तदलाभे दधि ग्राह्यमलाभे तैलमिष्यते ॥ ४७ ॥
यत्राद्यमञ्जनाद्यर्थं न लभ्येत कथञ्चन ।
तत्र क्षीरमनादृत्य साक्षात्तैलं ग्रहीष्यते ॥ ४८ ॥
यत्र मुख्यं दधि क्षीरं तत्रापि तदभावतः ।
अजादेः क्षीरदध्यादि तदभावे तु गोघृतम् ॥ ४९ ॥
मुख्यासन्नोऽथवा ग्राह्यः कार्यकारणसन्ततौ ।
अतएव घृताभावे पूर्वं दधि ततः पयः ॥ ५० ॥

भारद्वाज इति । कश्चित् घृताभावे तैलमेवोपादेयं न दध्यादि इत्याह । यत्रेति । आद्यमाज्यम् । यथा यूपाञ्जनादौ । एवं दध्यभावे

प्रतिनिधिरुपादेय इत्याह । यथेति । अधुना प्रकारान्तरेण समनुग्रमाह । मुख्यासन्न इति । अथ वा, येन येन प्रकारेण मुख्यस्य कार्यकारणसन्ततौ योऽमुख्यासन्नः, स एव तत्प्रतिनिधिः । निदर्शयति । अत एवेति । दध्न एवासन्नत्वादाज्यस्य प्रतिनिधित्वम् । पयसोऽव्यवहितत्वात् ॥४६॥४७॥४८॥४९॥५०॥

अधुना साम्नाय्ये प्रतिनिधिश्चिन्त्यते ।

**साम्नाय्यं चेन्न लभ्येत पुरोडाशं प्रकुर्वते ।**
**पुरोडाशस्य चालाभे तत्रोपादीयते घृतम् ॥ ५१ ॥**

साम्नाय्येति सार्द्धपञ्चभिः । साम्नाय्यमिति इन्द्रदेवताकदधिपयोरूप * हविषो नामधेयम् । न लभ्येतेति । प्रवृत्तेः प्राक्, ततश्च नाशापहारादौ वा । पुरोडाशमिति । निर्वापपूर्वक ऐन्द्रः पुरोडाशः । स चायं प्रतिनिधित्वेन प्रतिज्ञानात्साम्नाय्यधर्मको भवतीत्युक्तमन्यत्र । तस्याप्यलाभे प्रतिनिध्यन्तरमाह । घृतमिति । इदञ्च साम्नाय्यस्यैव प्रतिनिधिः न पुरोडाशस्य । पूर्वस्य शास्त्रस्य ज्ञापनार्थं तस्याप्यलाभ इति ॥५१॥

अथ सायंदोहविनाशे विशेषमाह ।

**सायन्दोहो विनष्टश्चेत् प्रातर्दोहं विभज्य तु ।**
**तत्रैकं भागमातच्य † दधियागे नियोजयेत् ॥ ५२ ॥**

* पयोदधिरूप, — इति क॰ पुस्तके पाठः ।
† भागमातञ्च्य, — इति क॰ ख॰ पुस्तकयोः पाठः ।



आतच्येति । आतञ्चनसद्भावे प्रातर्दोहविशेषेण । अभावे * वक्ष्यमाणद्रव्यैः ॥५२॥

वत्सापाकरणं श्रूयते । तत्र वत्साभावे एकस्यास्तिसृणां वा सत्त्वे पूर्वोक्तपुरोडाशादिकं भविष्यतीत्याशङ्कापरिहारायाह ।

**गवां साम्नाय्यदोग्ध्रीणां षडादीनामसम्भवे ।**
**द्विर्दुह्यन्तेऽथ गास्तिस्र एकां षट्कृत्व एव वा ॥ ५३ ॥**

गवामिति । त्रित्वसत्त्वे † प्रतिगवं द्विर्दोहनं, एकस्याः ‡ षट्कृत्वो दोहनमिति विशेषः ॥५३॥

आतञ्चनापचारे तत्प्रतिनिधीनाह ।

**उत्क्षेपणापचारे तु मेध्यैरोषधितण्डुलैः ।**
**साम्नाय्यातञ्चनं कुर्यादोषधीभिस्तदत्यये ॥ ५४ ॥**

उत्क्षेपणापचारेति ॥५४॥

अथ शाखामधिकृत्य श्रूयते । बहु§पर्णामशुष्काग्रामिति । पुनश्च श्रूयते । प्रागुदीचीमिति । तत्र संशयः । या प्रागुदीची सा पर्णादिगुणरहिता या च पर्णादिगुणमती ‖ सा प्रागुदीचीगुणरहिता,

* अलाभे, — इति क॰ पुस्तके पाठः ।
† त्रिसत्त्वे, — इति क॰ पुस्तके पाठः ।
‡ एकस्यां, — इति ङ॰ पुस्तके पाठः ।
§ बहुल, — इति ङ॰ पुस्तके पाठः ।
‖ इत्यमेव पाठः सर्वत्र । गुणवती, — इति तु भवितुमुचितम् ।

तदा किमनीय इति । तत्र मुख्यसमवेतत्वात्पर्णादिगुणादर इति पूर्वपक्षनिराकरणायाह ।

**प्रागुदीच्यादिका * शाखा बहुपर्णादियोगिनी ।**
**नास्ति चेत् तत्र पर्णादिगुणान् हित्वा दिगादरः ॥५५॥**

प्रागुदीचीति । स्पष्टम् ॥५५॥

इदानीमिदं विचार्यते । किमवत्तस्योद्धृतस्य ह्यवदानमात्रस्य नाशे हविरन्तरमुत्पाद्यम्, उत तस्मादेव हविःशेषात्पुनरवेद्यमिति । तत्रैकदेशिमतमाह ।

**अवदानविनाशे तु तस्यैव हविषः स्मृतात् ।**
**मध्यात्पूर्वार्द्धतोग्राह्यं नान्यदित्याश्वलायनः ॥ ५६ ॥**

अवदानेति । नान्यदिति हविरन्तरं नोत्पादनीयमिति । सिद्धान्तस्तु पृथगेकदेशिमतोत्थापनेनैवोक्तः । स यथा । तत्र चेदं कात्यायनसूत्रम् । अवत्तनाशे ऽन्यत्, गुणानुग्रहात् । अस्यार्थः । अथावत्तस्य पुरोडाशचर्वादेः सकाशात् पृथक् कृतस्यावदानद्वयमात्रस्य नाशे अन्यद्धविरुत्पादनीयं यागार्थम् । कुतः । गुणानुग्रहात् । एवं कृते मध्यपूर्वार्द्धावदानरूपेण गुणेनाङ्गेन साधनभूतेन यागोऽनुगृहीतो भवति । शेषात् पुनरवदाय यागः क्रियते चेत्, तदा तस्य पूर्वार्द्धविकलत्वात् विगुण एव यागो भवेत् । कथम् । ह्यवदानस्यैव यागार्थत्वपक्षे तस्य विनष्टत्वादवशिष्टस्यायागार्थत्वात् । समस्तपुरोडाशस्य यागार्थत्वेऽपि ह्यवदाननाशेन * तस्य विकलत्वात् । न चासौ यागो विगुण इष्यते । तस्माद्धविरन्तरमेवोत्पाद्यमिति ।

यत्पुनरुच्यते, सकलस्य पुरोडाशस्य हविष्ट्वमिति तत्र पुरोडाशस्य यौ मध्यपूर्वार्द्धावयवौ तदपादानकस्तदवयवभूतमवदानद्वयं यागसाधनन्तन्नाशे मध्यपूर्वार्द्धावयविनि सकलरूपे पुरोडाशे योमध्यावयवः पूर्वार्द्धावयवस्यापादानभूतः स पूर्वावदानापेक्षयाऽवयवी तस्मिन्नवदानोद्धरणेन विनष्टेऽपि † मध्योत्तरस्य पूर्वार्द्धोत्तरस्य ‡ अवदानद्वयोपलक्षणत्वेन विद्यमानत्वात्तत एव पुनरवदेयम् । ननु कृत्स्नस्य मध्यपूर्वार्द्धे अवदेये न विकलस्येति चेत् । तन्न । शास्त्रार्थत्वात् । मध्यादवद्यतीत्येतावदेव श्रूयते । न तु सकलस्य पुरोडाशस्य मध्यादिति । तस्मात् पूर्वशेषादेवावदेयम् ।

तन्न । गुणहानौ तु शेषभावात् § । हविषो मध्यपूर्वार्द्धभागस्य यागं प्रति गुणभूतस्य यागसाधनभूतस्य हानौ नाशे सति न पूर्वशेषादवदेयम् । कुतः । शेषभावात् । शेषत्वादेव । तस्यावशिष्टस्य शेषकार्य्यार्थत्वादित्यर्थः । कृत्स्नस्य हि पुरोडाशस्य यो-मध्यदेशस्तदपादानकोयस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रावयवः सोऽव-

* प्रागुदीच्यागता, — इति क० पुस्तके पाठः ।

* अवदाननाशेन, — इति क० पुस्तके पाठः ।

† तस्मिन्नवदानोद्धरणविनष्टेऽपि, — इति क० पुस्तके पाठः ।

‡ पूर्वार्द्धोत्तरस्य, — इति ख० पुस्तके पाठः । मन्तु, मध्यान्तरस्य पूर्वार्द्धान्तरस्य, — इति पाठः प्रतिभाति ।

§ इदं सूत्रमिति प्रतिभाति ।

दातव्यः । अन्यस्त्ववदेयत्वापादानभूतः । न चासाववदातव्यः । स स्विष्टकृदादिशेषकार्य्यार्थः । अतोऽनाशौ हविः । यत्तु हविस्तद्विनष्टम् । तद्विनाशे च हविरन्तरमेवोत्पाद्यम् । यदा च ध्रुवदानस्यैव यागार्थता, ततस्तद्विनाशे शेषस्य कार्य्यार्थलाभावात् द्रव्यान्तरं यागार्थमुत्पाद्यम् । यदाऽपि समस्तपुरोडाशनाश्योर्यागस्तदाऽपि ध्रुवदाननाशे तस्य विकल्पत्वादविकल्पं हविरन्तरमुत्पाद्यम् । तस्मात् साधूक्तमवत्तनाशेऽन्यदिति । तदुक्तम् ।

संस्काराणां पुरोडाशे ध्रुवदानं प्रयोजकम् ।
तद्विनाशाच्च नष्टास्ते नावदेयमतस्ततः ॥
गृहीतौ मध्यपूर्वार्द्धौ तौ विनष्टावुभावपि ।
अतः शेषस्य शेषत्वात् प्रधानत्वं न युज्यते इति ॥

अतएवाश्वलायनग्रहणं कुर्वन्नेकदेशिमतमिति सूचयति । अन्यहविषोऽसम्भवे तु वक्ष्यते ।

येषां येषां चिदन्येषां हविषामप्यसम्भवे ।
सर्वत्राज्यमुपादेयं भरद्वाजमुनेर्मतादिति * ॥५६॥

अथ सूयते । यज्जुह्वां गृह्णाति तत्प्रयाजेभ्योयदुपभृति गृह्णाति तत्प्रयाजानुयाजेभ्य इति । तत्रैकस्योभयोर्वाऽऽज्यस्य नाशे किं प्रतिनिधेयमिति सन्देहे आज्यस्यानयोराज्यान्तरं ग्राह्यमिति प्राप्ते सिद्धान्तयति ।

**जुह्वुपभृद्गृहीते नष्टे ध्रौवाज्यस्य सकाशतः ।**
**आज्यग्रहणमाचष्टे कात्यायनमहामुनिः ॥ ५७ ॥**

* इयं मूलकारिकैव प्रमाणतयोपन्यस्ता । इति वक्ष्यते इत्यन्वयः ।



जुह्व इति । तथा च कात्यायनः । जुह्वादुष्टे पुनर्ग्रहणं स्याद्ध्रुवायादाय ततोयज्ञः प्रभवतीति श्रुतेः ॥५७॥

अथ प्रसङ्गादाह ।

**पशावुपाकृते याते मृते वाऽस्मिन्नकामतः ।**
**अन्यन्तद्रूपतद्वर्णतद्वयस्कमुपाचरेत् ॥ ५८ ॥**

पशाविति । उपाकृते उपाकरणे कृते सति याते पलायिते मृते वा । अन्यं पश्वन्तरमुपाचरेत् आलभेत । तदुक्तं कात्यायनेन । पशुश्चेदुपाकृतः पलायेत वायवे तमनूद्दिश्यान्यन्तद्वर्णं तद्वयसमालभेतेति । अकामत इति । पलायनोत्तरं महता प्रयत्नेन अन्वेषितव्यः । ततोऽप्यलाभेऽन्यमालभेतेति भावः । मरणे तु विशेषमाह कात्यायनः । प्राक् प्रयाजेभ्यश्चेन्नियुक्तोम्रियेतान्यमालभेत । पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् सोमस्याग्नेर्मार्जालीये दीक्षाणाः पितर इत्यादि ॥ ५८॥

पश्वन्तरोपादाने कृते यदि पूर्वालब्धः * स्यात्तदा किं कुर्यादित्यत आह ।

**तस्मिन्नुपाकृते पूर्वः पशुः सम्प्राप्यते यदा ।**
**नाद्रियेत तदा पूर्वमुपालम्भः परस्य वा ॥ ५९ ॥**

तस्मिन्निति । पूर्वं पशुं नाद्रियेत । परस्योपालम्भः । पूर्व्वस्योपा-

* पूर्व्वोपालम्भः, – इति ख० पुस्तके पाठः ।

लम्भो वायवेऽनुपालम्भो वा । तदुक्तम् । उपालभ्यं तं वायवे सम-
नाहरणं वेति ॥५९॥

पशौ पलायिते तस्मिन्* अनुपलभमाने च प्रतिनिधिमाह ।

**पशुप्रतिनिधी ज्ञेयौ गौरश्वश्च परस्परम् ।**
**पशुयागप्रसिध्यर्थं छागमेषौ परस्परम् ॥ ६० ॥**

पशुरिति । अश्वगवयोरन्योन्यं प्रातिनिध्यं सामान्यात् । एवं छागमेषयोः ॥६०॥

ननु सामान्यं प्रतिनिधावुपोद्यमिति । ततश्च† छागाभावे मेषापेक्षया सामान्यात्कार्याच्छागोपालम्भितव्य इति प्राप्ते आह ।

**कूटकर्णस्तथा काणः खण्डोवण्ड‡स्त्वपन्नदन् ।**
**श्रोणः सप्तशफश्चेति न स्यात्प्रतिनिधिः पशोः ॥ ६१ ॥**

कूट इति द्वाभ्याम् । कूटकर्णश्छिन्नकर्णः । काण एकाक्षः । खण्डोऽपुच्छः । वण्डोभग्नशृङ्गः । अपत् एकेन द्वाभ्यां त्रिभिर्वा चरणैर्हीनः । अदन् अदन्तः । श्रोणोऽमुष्कः । सप्तशफः एकेन शफेन न्यूनः । तथा एकशफाश्वाकारचरणाद्यः । एते मुख्या अपि यथोक्तच्छागाभावे नोपादेयाः, किन्तु मेष एवोपादेयः ॥६१॥

तत्र हेतुमाह ।

---

* तस्मिन्, — इति नास्ति ख० पुस्तके पाठः ।

† तत्र, — इति क० पुस्तके पाठः ।

‡ भण्ड, — इति क० पुस्तके पाठः । एवं टीकायामपि ।



**अभक्ष्यत्वादेकशफो होमकार्येषु न क्वचित् ।**
**ग्राह्यः प्रतिनिधित्वेन सत्याषाढनिरूपणात् ॥ ६२ ॥**

अभक्ष्यत्वादिति । दुष्टत्वादिति भावः । तदाह कात्यायनः । शिष्टभक्ष्यप्रतिषिद्धं दुष्टमिति ॥६२॥

सत्याषाढमतमुक्त्वा भरद्वाजमतमुपन्यस्यति ।

**भरद्वाजस्तु नातीव निषिद्धं द्रव्यमाहरेत् ।**
**सामान्यचोदितं वाऽपि विशेषे विनिवारितम् ॥ ६३ ॥**

भरद्वाज इति । अतीव निषिद्धम्, अयज्ञियामाषा इत्यादि । अधिकरणमवतारयति । सामान्येति । यथा । अग्नीषोमीयपशुमालभेतेत्यादि सामान्येन श्रुतम् । क्वापि कुत्रापि विशेषशास्त्रे विनिवारितं निषिद्धम् ॥६३॥

विचारविषयमाह ।

**अनिषिद्धविशेषत्वमलब्धश्चेज्जिघृक्षया ।**
**तत्र जात्यन्तरं किं तत्सदृशं गृह्यतामुत ॥ ६४ ॥**
**तज्जातीयो विशेषो वा निषिद्ध इति संशये* ।**

अनिषिद्धेति । अनिषिद्धो वाक्येन विशेषो यस्मिन्, तादृशमलब्धश्चेदित्यर्थः । संशयमाह । जिघृक्षयेति ॥६४॥

पूर्वोक्तं सत्याषाढमतं पूर्वपक्षीकृत्योत्तरपक्षमाह ।

---

* संशयः, — इति क० पुस्तके पाठः ।

वरञ्जात्यन्तरं तत्र निषिद्धोऽपि स्वजातिमान् ॥ ६५ ॥
अकूटच्छागालाभे स्याच्छागः कूटोऽपि न त्वविः ।
कूटच्छागाद्यभावे स्यान्मेषादिरिति भाष्यते ॥ ६६ ॥

वरमिति । मेषविषयमाह । कूटेति ॥ ६५ ॥ ६६ ॥

एवमेव न्यायमौषध्यादिद्रव्येष्वतारयति ।

तस्माद्द्रव्यान्तराणाञ्च निषिद्धानामशेषतः ।
धान्यकाष्ठतृणादीनामादानं युज्यते क्वचित् ॥ ६७ ॥

तस्मादिति । धान्यं व्रीह्यादिषु । काष्ठं पलाशेषु । तृणं बर्हिषि । एतन्मतस्यास्वरसादाह । क्वचिदिति ॥ ६७ ॥

पश्ववदानहानौ पूर्वोक्तन्यायेनान्यपश्वालम्भप्राप्तौ सिद्धान्तमाह ।

प्राप्तं पश्ववदानानां यावतामवलोपनम् ।
तावत्स्वत्वोद्धृतं ग्राह्यमपि सर्वविलोपने ॥ ६८ ॥

प्राप्तमिति ॥ ६८ ॥

अन्याचार्यसिद्धान्तमाह ।

अन्ये पश्ववदानानां निःशेषमवलोपने ।
तथाज्यं न ग्रहीतव्यं पशुरेवेति मन्वते ॥ ६९ ॥

अन्ये इति । एकस्य हृदयादीनां नाशे आज्येनावदेयम् । सर्वावदाननाशे पश्वन्तरमेवेति मन्यन्ते ॥ ६९ ॥

हृदयमात्रनाशे विशेषमाह ।



हृदयस्य विनाशे तु पशुमन्यं प्रयोजयेत् ।
यदा कातीयसूत्रेण तत्स्थानेऽपि घृतं भवेत् ॥ ७० ॥

हृदयस्येति । हृदयं पशोरिति वचनात् । कात्यायनमतमुपन्यस्यति । यदेति । तत्स्थाने हृदयस्थानेऽपि । तथाचाह कात्यायनः । सर्वेषां वाऽऽज्यस्य गुणत्वादर्थवादमात्रं पशुवचनम् ॥ ७० ॥

वपानाशे विशेषमाह ।

पश्चादृत्तिर्वपानाशे न त्वाज्यं तत्र गृह्यते ।
भरद्वाजमतादन्ये तथाप्याददते घृतम् ॥ ७१ ॥

पश्चादृत्तिरिति । भरद्वाजमतेनाह । भरद्वाजेति ॥ ७१ ॥

यत्र यत्र पश्वन्तरालम्भो विहितोऽस्ति तत्र पूर्वपशोः प्रतिपत्त्यर्थमाह ।

यदा पश्वन्तरालम्भपक्षोऽत्र परिगृह्यते ।
नष्टशेषं पशोर्भागमुत्करे सन्त्यजेत्तदा ॥ ७२ ॥

यदेति ॥ ७२ ॥

उक्तार्थमुपसंहरति ।

येषां केषाञ्चिदन्येषां हविषामप्यसम्भवे ।
सर्व्वत्राज्यमुपादेयं भरद्वाजमुनेर्मतात् ॥ ७३ ॥

पशुव्यापन्नहविरन्तरासम्भवेऽपि आज्यमुपादेयमित्याह । येषामिति । स्पष्टम् ॥ ७३ ॥

सोमाभावे तु पूतीकाः पूतिकानामसम्भवे ।
आदारान् छेदमूलानि गृह्णीयात् फाल्गुनानि वा ॥७४॥
तदभावे तु गृह्णीयादोषधीः क्षीरसंयुताः ।
तथैव वारुणा दूर्व्वाः कुशान् वा हरितस्तथा ॥ ७५ ॥
बर्हिः कुशमयं ग्राह्यं न लभ्यन्ते कुशा यदि ।
शरशैर्यमुतवाश्ववालमौञ्जार्ज्जुनेक्षवः ॥ ७६ ॥
सुगन्धितेजना दारुदूर्व्वाक्षीरद्रुमा अपि ।
कुशाभावे ग्रहीतव्या बर्हिःकार्य्ये पृथक् पृथक् ॥ ७७ ॥
यद्वा सर्व्वतृणेभ्योऽपि ग्राह्यं बर्हिर्यथेप्सितम् ।
शुकशुम्बलक्षणातूलदुर्गन्धतृणवर्ज्जितम् ॥ ७८ ॥

सोमप्रतिनिधीनाह ।

सोमाभावे त्विति द्वाभ्याम् । यदि सोमं न विन्देत् पूतीकानभिषुणुयादित्यत्र न सोमालाभे पूतीकविधिः । किन्तु प्रतिनिधितया प्राप्तेष्वनेकेषु द्रव्येषु पूतीकानां नियमः इति षष्ठे सिद्धान्तितम् । एवञ्च पूतीकाभावे न पूतीकसदृशमुपादेयं किन्तु सोमसदृशमेवादारादिकमिति भावः ॥७४॥७५॥

बर्हिरिति । कुशमयं बर्हिरिति तावन्मुख्यः कल्पः । तदसम्भवे शरादयो ग्राह्याः ॥७६॥७७॥

मतान्तरमाह । यद्वेति । शुकशुम्बादिवर्जनं यथा भवति तथा सर्व्वतृणेभ्यो बर्हिर्ग्राह्यम् । शुकशुम्बादिवर्जितेभ्यः सर्व्वतृणेभ्य इति यावत् ॥७८॥



बौधायनादिभिः प्रोक्तो विधिरत्र मतात् पुनः ।
सूकलानेकलांश्चापि वर्जयन्त्यपरे बुधाः ॥ ७९ ॥
कुशाभावे कठाः प्राहुः पर्व्वपल्लवदोषधीः ।
वरुकरतारकटकपरिध्याधकवर्ज्जिताः ॥ ८० ॥
मुख्यान्येवेति भाषन्ते केचित् काशान् कुशान् शरान् ।
बल्वजान् पुण्डरीकाणि यवव्रीहितृणान्यपि ॥ ८१ ॥
पालाशः खादिरो वेध्मो मुख्यः स्यात्तदलाभतः ।
वनस्पतीनां सर्व्वेषामिध्मः कार्य्यो विशेषतः ॥ ८२ ॥

बौधायनादिभिरिति । सोऽयं बौधायनादिसम्मतो विधिः । मतात् पुनरिति । मतादिति ल्यब्लोपे पञ्चमी । पुनरप्रथमे भेदे इति कोषात्, मतान्तरमाश्रित्यापरे सूकलानेकलांश्च वर्जयन्ति । सदृशानेकलांश्चापीति पाठान्तरम् ॥७९॥

मतान्तरमाह । कुशाभावे इति ॥८०॥

मतान्तरमाह । मुख्यानीति । काशकुशादयः सर्व्वे मुख्याः । न तु काशादीनां कुशप्रतिनिधित्वमित्यर्थः ॥८१॥

पालाश इति । इध्मो नामाग्नीन्धनार्थः प्रादेशद्वयपरिमितकाष्ठरूपः । स च पालाशः खादिरो वेति मुख्यः कल्पः । तदसम्भवे प्रतिषिद्धवर्जं सर्व्ववनस्पतीनां कार्य्यः । खादिरपालाशयोर्विकल्पः ॥८२॥

तत्रैतान् वर्जयेद्वृक्षान् कोविदारविभीतकौ ।
कपित्थं करभं राजवृक्षं शाकद्रुमं तथा ॥ ८३ ॥
नीपं निम्बं करञ्जं च तिलकं शाल्मलीमपि ।
श्लेष्मातकमपि त्यक्त्वा ग्राह्योऽन्यः सकलो द्रुमः ॥ ८४ ॥
पालाशः खादिरो वैल्वो यूपो रौहितकोऽपि वा ।
औदुम्बरो वा यूपः स्यादित्याहुः कठशाखिनः ॥ ८५ ॥
यूपेष्वविद्यमानेषु ग्राह्यः कश्चिद्वनस्पतिः ।
तदभावे तु यं कञ्चिद् याज्ञिकं वृक्षमाहरेत् ॥ ८६ ॥
अग्निहोत्रहवन्यत्र कार्या वैकङ्कती शुभा ।
पालाशी तु कठश्रुत्या तदभावेऽन्यवृक्षजा ॥ ८७ ॥
आपस्तम्बोक्तवृक्षोत्था भवेयुः क्रतुषु स्रुचः ।
शमीमय्योऽथवा भूर्जवृक्षमय्यः कठश्रुतेः ॥ ८८ ॥

प्रतिषिद्धानाह । तत्रेति द्वाभ्याम् । एतांस्त्यक्त्वाऽन्यः सकलो द्रुमो ग्राह्य इति स्पष्टार्थमभिधानम् ॥८३॥८४॥

यूपविधिमाह । पालाश इति द्वाभ्याम् । स्पष्टार्थौ श्लोकौ ॥८५॥८६॥

स्रुचमधिकृत्याह । अग्निहोत्रेति । अग्निहोत्रं हूयते यया सेयमग्निहोत्रहवनी स्रुक् ॥८७॥

अग्निहोत्रादन्यत्राह । आपस्तम्बोक्तेति ॥८८॥



तदलाभे यथालाभमन्ययाज्ञिकवृक्षजाः ।
खादिरो मुसलः कार्य्यः पालाशः स्यादुलूखलः ॥ ८९ ॥
यद्वोभौ वारणौ कार्य्यौ तदभावेऽन्यवृक्षजौ ।
रौहीतकान् न्यग्रोधोत्थान् पालाशान् वा कठश्रुतेः ॥९०॥
कुर्व्वीत चमसांस्तेषामभावेऽन्यद्रुमोद्भवान् ।
आश्वत्थं वारणं नो चेदिडापात्रमिहान्यजम् ॥ ९१ ॥
न लभ्यन्ते यदा गावो दक्षिणार्थेन चोदिताः ।
प्रत्येकं तत्र निष्कः स्यात्तदर्द्धं पाद एव वा ॥ ९२ ॥
द्रव्याणामेकजातीनां बहूनां यत्र चोदना ।
तत्रार्द्धं मुख्यलाभेऽपि शेषे प्रतिनिधिर्भवेत् ॥ ९३ ॥

मुसलोलूखलयोर्विधिमाह । खादिर इति ॥८९॥

मतान्तरमाह । यद्वेति । उभौ मुसलोलूखलौ । चमसप्रकृतिमाह । रौहीतकानित्यादिना ॥९०॥

कुर्व्वीतेति । रौहीतकानित्यादिना गतेन सम्बन्धः । आश्वत्थमिति । इडापात्रं तावदाश्वत्थं वारणं वा कार्य्यम् । तदसम्भवे त्वन्यवृक्षजमित्यर्थः ॥९१॥

नेति । निष्कादयो गोः प्रत्याम्नायाः । निष्कस्त्वनेकधा स्मर्य्यते । तथा चामरः । साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्रीति । दीनारो मत्स्यपुराणेन व्याख्यातः । यथा । दीनारो रूपकैरष्टाविंशत्या परिकीर्त्तितः । सुवर्णसप्ततितमो भागो रूपक उच्यते । मनुः । चतुःसौवर्णिको निष्क इति ॥९१॥

सर्व्वोऽपि मुख्य एव स्यात् सर्व्वो गौणोऽथवा भवेत् ।
इत्येवमेकरूपत्वे न युक्तः कर्त्तुमाग्रहः ॥ ९४ ॥
गावो हेमानि वस्त्राणि चोद्यन्ते यत्र दक्षिणाः ।
तदभावे ददेदन्यांस्तत्संख्यानथवौदनान् ॥ ९५ ॥
तयोरभावे कन्दानि मूलान्याहो फलानि च ।
नित्यस्य कर्म्मणः कार्य्यं सर्व्वथैव समापनम् ॥ ९६ ॥
वाजपेयक्रतौ सर्व्वदक्षिणानामसम्भवे ।
गावः सप्तदशैकेषां सम्भवेऽपीति सामगाः ॥ ९७ ॥
यज्ञोपवीतस्याभावे वस्त्रोपव्यानमाचरेत् ।
तदभावे तु सूत्रेण त्रिवृतोपव्ययेत सः ॥ ९८ ॥
भुञ्जीयातां घृतेनैव स्वामिनाविष्टिमध्यतः ।
दध्ना क्षीरेण वा कार्य्यं घृताभावे तु भोजनम् ॥ ९९ ॥

द्रव्याणामित्यादिश्लोकद्वयं स्पष्टार्थम् ॥९३॥९४॥

गाव इति । मन्त्रास्तु, दधिमधुसलिलेषु सक्तवः पृथगेते चि-तावद्व मन्त्राः — इति गृह्यासङ्ग्रहे व्याख्याताः ॥९५॥

तयोरिति । तयोर्मन्त्रौदनयोः ॥९६॥

वाजपेयेति । एकेषामाचार्य्याणां मते सर्व्वदक्षिणाऽसम्भवे सप्तदश-गावो देयाः । सर्व्वदक्षिणासम्भवेऽपीति छन्दोगानां मतम् ॥९७॥

यज्ञोपवीतस्येति । यज्ञोपवीतं उपदिष्टगुणोपेतं ब्रह्मसूत्रम् । तस्याभावे वस्त्रेण, तस्याप्यभावे त्रिवृता सूत्रेणोपव्यानं कुर्य्यात् ॥९८॥

भुञ्जीयातामिति । स्वामिनौ दम्पती । स्पष्टमन्यत् ॥९९॥



मुख्यवृत्त्यर्ज्जितं गौणं द्रव्यं यद्यपि विद्यते ।
तथापि गौणवृत्त्याप्तं मुख्यं द्रव्यं ग्रहीष्यते ॥ १०० ॥
मुख्यवृत्त्यर्जितं द्रव्यं यागार्थं चेन्न लभ्यते ।
स्तेयाद्यन्यैरसन्मार्गैरर्ज्जितेनापि चेज्यते ॥ १०१ ॥
मन्त्रोक्तानुक्तगुणकं चोदितं चेन्न लभ्यते ।
मन्त्रानुक्तगुणं हित्वा स्यान्मन्त्रोक्तगुणादरः ॥ १०२ ॥
विशिष्टावयवद्रव्यं विशिष्टगुणयोगि च ।
चोदिताङ्गमलभ्यं वै तत्र कार्य्यो गुणादरः ॥ १०३ ॥

मुख्येति । वर्णानुसारेणानुशिष्टा वृत्तिर्मुख्या । अनन्तरवर्ण-वृत्तिः पूर्व्वस्य गौणी । वृत्तिर्जीवनोपायः प्रतिग्रहादिरूपः । आप्त-मर्जितम् ॥१००॥

मुख्येति । स्तेयाद्यन्यैरित्यनेन स्तेयार्जितधनेन न यष्टव्यमित्युक्तम् । असन्मार्गा अविक्रेयविक्रयादयः ॥१०१॥

मन्त्रेति । मन्त्रोक्तगुणकं मन्त्रानुक्तगुणकं ब्राह्मणोक्तगुणकमित्ये-तत् । यत्र मन्त्रब्राह्मणाभ्यां पृथक् पृथक् गुणा अभिहिताः, तत्र तदुभयगुणयुक्तद्रव्यालाभे ब्राह्मणोक्तगुणानुपेक्ष्य मन्त्रोक्तगुणा एवा-दरणीया इत्यर्थः ॥१०२॥

विशिष्टेति । यत्राङ्गद्रव्यस्यावयवविशेषा गुणविशेषाश्चोपदिष्टा-स्तत्रोभयोपसंहाराद्यसम्भवे गुणादरः कार्य्यः ॥१०३॥

स्थूलादिपरिमाणञ्च द्रव्यं शुक्लादिरूपवत् ।
चोदिताङ्गमलभ्यं चेत्तत्र रूपादरो भवेत् ॥ १०४ ॥
दूरासन्नगुणोपेतमङ्गं न प्राप्यते यदि ।
दूरवर्त्तिगुणं हित्वा स्यादासन्नगुणादरः ॥ १०५ ॥
नानाधर्म्मवदङ्गं चेदलभ्यं तत्र गृह्यते ।
स्वभावबलवद्धर्म्मबलवच्छास्त्रचोदितम् ॥ १०६ ॥
शास्त्रधर्म्मान् प्रतिनिधौ शक्त्या सर्व्वान् प्रयोजयेत् ।
मुख्याभिधायकान्मन्त्राननूहेनैव कीर्त्तयेत् ॥ १०७ ॥
सर्व्वंप्रतिनिधौ कार्य्यमनाम्नातजपादिकम् ।

स्थूलेति । शिष्टयोः परिमाणरूपयोरुपसंहारासम्भवे परिमाणमुपेक्ष्य रूपमादरणीयम् ॥१०४॥

दूरेति । अङ्गद्रव्यस्य दूरवर्त्तिन आसन्नाश्च गुणा यत्रोपदिष्टास्तत्रोभयोपसंहारासम्भवे आसन्नगुणादरः कार्य्यः ॥१०५॥

नानेति । यत्राङ्गे नाना धर्म्मा उपदिष्टास्तत्र तावद्धर्म्मयुतस्यालाभासम्भवे यो धर्म्मः स्वभावतो बलवान् यो वा बलवता शास्त्रेणोपदिष्टस्तद्धर्म्मयुतमङ्गं ग्रहीतव्यम् ॥१०६॥

शास्त्रेति । मुख्ये ये धर्म्माः शास्त्रेणोपदिष्टास्ते यावच्छक्ति प्रतिनिधौ प्रयोज्याः । मुख्याभिधायकाश्च मन्त्राः प्रतिनिधावनूहेनैव पाठ्याः ॥१०७॥

सर्व्वेति । प्रतिनिध्युपादानेऽपि मुख्यस्य लोपात् प्रसक्तं वैगुण्य-



यद्वा प्रतिनिधानेनैवार्थसिद्धिः कठाश्रयात् ॥ १०८ ॥
यत्र प्रतिनिधिर्द्दातुं नैव शक्यः कथञ्चन ।
तत्रापि वाक्यसामर्थ्यात्तत्कार्य्येऽन्यद्विधीयते ॥ १०९ ॥
आग्रयणे पशौ सोमे चातुर्मास्येष्वसम्भवे ।
इष्टिं वैश्वानरीं कुर्य्यात्तत्तत्कार्य्यप्रसिद्धये ॥ ११० ॥
प्रायश्चित्तेष्टिकार्य्येषु कार्य्या पूर्णाहुतिर्बुधैः ।
पश्विष्टेरपि च स्थाने प्राहुः पूर्णाहुतिं परे ॥ १११ ॥
सत्रायागूर्य्य तत्कर्त्तुमसमर्थस्य विश्वजित् ।
यद्वा वैधातवीया स्यात् सहस्रपशुदक्षिणा ॥ ११२ ॥

मनाम्नातजपादिना शमनीयम् । मतान्तरमाह । यद्वेति । प्रतिनिधिनैव कर्म्मसाद्गुण्याच्च तदर्थमनाम्नातजपादिकमित्यर्थः ॥१०८॥

यत्रेति । न्यायप्राप्तप्रतिनिध्यभावेऽसदृशमपि वचनप्राप्तं प्रतिनिधेयमित्यर्थः ॥१०९॥

आग्रयणे इति । आग्रयणादौ यानि यानि कार्य्याणि न सम्भवन्ति, तत्तत्प्रसिद्ध्यर्थं वैश्वानरीमिष्टिं कुर्य्यात् ॥११०॥

प्रायश्चित्तेष्टीति । प्रायश्चित्तेष्टिः तत्स्थाने पूर्णाहुतिर्व्वा कार्य्या । पश्विष्टिस्थानेऽपि पूर्णाहुतिं केचिदिच्छन्ति । परे इति कुर्व्वन् अन्ये नेच्छन्तीत्यपि सूचयति ॥१११॥

सत्रायेति । सत्रं कर्त्तुमागूर्य्यागूं कृत्वा यदि तत्कर्त्तुं न शक्नुयात्, तदा विश्वजितं सहस्रपशुदक्षिणां वैधातवीयामिष्टिं वा कुर्य्यात् । आगूर्नाम याज्यादौ पठनीयो मन्त्रविशेषः ॥११२॥

उद्वातो मथ्यमानोऽग्निर्न जायेत यदि कश्चित् ।
लौकिकेऽग्नावजाकर्णे विप्रपाण्योरसव्ययोः ॥ ११३ ॥
दर्भस्तम्बेऽप्सु वाऽनुज्ञा परयोर्होमयोर्द्वयोः ।
यद्वैकस्यैव होमस्य काष्ठेऽनुज्ञाप्य वा भुवि ॥ ११४ ॥
अरण्यारोपितोऽप्यग्निर्मथ्यमानो न चेद्भवेत् ।
तथापि गतिरेषैव कर्तुं युक्ता मनीषिभिः ॥ ११५ ॥
अरण्यारोपितस्याग्नेः पश्चात्तरमपीच्छति ।
बौधायनो न शक्यं चेन्मन्थनं वाऽपि धारणम् ॥ ११६ ॥
लौकिकं वह्निमादीप्य विहृत्याग्नेस्तु मथ्यतः ।
आरोपितारणीं क्षिप्त्वा जुहुयादग्निहोत्रकम् ॥ ११७ ॥

उद्वात इति । यदाऽग्निरुद्वातस्तदा मन्थनेनाग्निं सम्पादयेत् । मथ्यमानोऽपि यद्यग्निर्नोत्पद्यते, तदा लौकिकाग्न्यादौ परयोर्होमयोरभ्यनुज्ञा । मतान्तरे त्वेकस्यैव होमस्य ब्राह्मणानुज्ञया काष्ठादौ करणम् । द्वितीयस्तु होमः सर्वथाऽग्निमुत्पाद्य तत्रैव करणीयः । असव्ययोर्दक्षिणयोः ॥११३॥११४॥

अरणीति । अरण्यामग्निमारोप्याहिताग्नेः प्रवासो विहितः । प्रवासे चारणिं मथित्वाऽग्निमुत्पाद्य तत्राग्निहोत्रं कर्त्तव्यम् । यदि तु मथ्यमानोऽप्यग्निर्न जायते, तदा पूर्वोक्तैव गतिः ॥११५॥

अथ मतान्तरमाह अरणीति द्वाभ्याम् । अरण्यामारोपितस्याग्नेरिति सम्बन्धलक्षणा षष्ठी । बौधायन इच्छतीति गतेन सम्बन्धः । अग्निरारोपितो यस्यां तामरणिमग्नेर्मध्यतः क्षिपेदित्यन्वयः ॥ ११६॥११७॥



मन्थनं धारणं वाऽग्नेर्यावत्कालं न सम्भवेत् ।
तावत्कालं जुहोत्येवमर्व्वागौपवसथ्यतः ॥ ११८ ॥
पश्चादौ यदि निर्मन्थ्यो मथ्यमानो न जायते ।
तत्कार्य्ये हेमशकलं भवतं न इति क्षिपेत् ॥ ११९ ॥
अभिहुत्य व्याहृतिभिरथाग्नावग्निरित्यपि ।
सावित्र्यादि प्रपद्येत भरद्वाजमुनेर्मतात् ॥ १२० ॥
पत्नी चेद्विधवा भूत्वा प्रमीयेत कदाचन ।
तदा श्रौताग्निशून्यत्वान्निर्मन्थ्येनैव दह्यते ॥ १२१ ॥
पुनः परिणयाधाने स्वामिनो यदि सिध्यतः ।
पत्न्यै मृतायै श्रौताग्निं दद्यान्निर्मन्थ्यमन्यथा ॥ १२२ ॥

एतादृशप्रकारेण होमस्यावधिमाह । मन्थनमित्यादिना ॥ ११८ ॥

पश्चादाविति । निर्मन्थ्य इति मन्थनोत्पन्नस्याग्नेर्नामधेयम् । मथ्यमानः सन् यदि निर्मन्थ्यो न जायते तदा भवतं न इति मन्त्रेण तत्कार्य्ये हेमखण्डं क्षिपेत् ॥११९॥

मतान्तरमाह । अभिहुत्येति ॥१२०॥

पत्नीति । प्रमीयते म्रियेत । श्रौताग्निशून्यत्वादिति । पूर्व्वंमृतस्य पत्युर्दाहे तद्विनियोगादिति भावः ॥१२१॥

पुनरिति । पत्न्यां मृतायां पत्युः पुनः परिणयस्य पुनराधानस्य च सम्भावनायां श्रौताग्निना पत्नीं दग्ध्वा पुनः परिणयं पुनराधानं च कुर्य्यात् । तदसम्भावनायान्तु निर्मन्थ्येनाग्निनैव सा दग्धव्या ॥ १२२॥

तथैवानेकभार्य्यस्य यद्येकाऽत्र प्रमीयते ।
नेच्छेत् पुनर्विवाहं चेन्निर्मन्थ्येनैव तां दहेत् ॥ १२३ ॥
किन्त्वेतावदिहाप्यस्ति दग्ध्वा निर्म्मन्थ्यवह्निना ।
उत्सर्गेष्ट्या त्यजेदग्नीन् पुनस्तानादधीत च ॥ १२४ ॥
मृतभार्य्यस्य यागादौ सर्व्वं स्त्रीकर्म्म लुप्यते ।
नान्येन केनचित् कार्य्यं मृतायाः कर्म्म किञ्चन ॥१२५॥
फलीकरोति यः कश्चिदिह दासी पिनष्टि च ।
संपत्नीयाहुतिस्तत्र सर्व्वथैव च लुप्यते ॥ १२६ ॥
चपत्नीकस्य हविःपाको नियतः पूर्व्वपावके ।
सर्व्वथा नापरे यज्ञाविति कात्यायनोऽब्रवीत् ॥१२७॥

तथैवेति । स्पष्टार्थः श्लोकः ॥१२३॥

अत्रैव विशेषमाह । किन्त्विति । मृतां पत्नीं निर्मन्थ्याग्निना दग्ध्वा उत्सर्गेष्टिविधिना अग्नीन् परित्यज्य तानग्नीन् पुनरादधीत ॥१२४॥

मृतभार्य्यस्येति । पत्नीकर्म्मशून्य एव तस्य याग इत्यर्थः । पत्न्याः प्रतिनिधिरूपेणापि केनचित्तत्कर्म्म न कर्त्तव्यमित्याह । नान्येनेति ॥ १२५॥

पत्नीकर्म्मलोपे फलीकरणादिकमपि न स्यात् तदभावे च हविरेव न निर्वहेदित्याशङ्क्याह । फलीकरोतीति । यः कश्चित् शिष्यादिः । स्पष्टमन्यत् ॥१२६॥

विशेषमाह । अपत्नीकस्येति ॥१२७॥



एवमुत्सर्गतः सर्व्वं पत्नीकर्म्म विलुप्यते ।
मृतभार्य्यस्य चैकाकिनोऽग्निहोत्रादि जुह्वतः ॥ १२८ ॥
पत्नीमन्त्रान् जपेत् स्वामी जीवन्ती चेन्न शक्नुयात् ।
लोपएवाथवा तेषामिति सूत्रेषु केषु चित् ॥ १२९ ॥

उपसंहरति । एवमिति ॥१२८॥

मृतभार्य्यस्य विधिमुक्त्वेदानीं जीवन्त्येव पत्नी यद्यशक्ता भवति तदा किं कर्त्तव्यमित्याकाङ्क्षायामाह । पत्नीमन्त्रानिति । मतान्तरे तु जीवन्त्यामशक्तायां पत्न्यां पत्नीमन्त्राणां लोप एवेत्यर्थः ॥ १२९॥

एवं केशवसिद्धान्तो मृतभार्यस्य भाषितः ।
आचार्यान्तरसिद्धान्ताः पुनराधौ प्रपञ्चिताः ॥ १३०॥

एवमिति । एवं पूर्वोक्तप्रकारोमृतपत्नीकस्य केशवसिद्धान्तानुसारेण भाषितः उक्तः । ननु अपत्नीकस्यान्येऽपि शाखान्तरगोचराविषयाः सन्तीति न्यूनत्वमाशङ्क्य परिहरति । आचार्य्येति । भविष्यन्तीति शेषः । स्वसूत्रसूत्रान्तरेषु । तेषां भिन्नप्रदेशीयत्वेन नात्रोद्भाविताः, किन्तु पुनराधिस्थले एव तेषां प्रपञ्चनं भविष्यतीति भावः ॥१३०॥

अपत्नीकाधिकारोपजिजीविषया इदमाह ।

प्रसूतायामशक्तायामपेतायां च केचन ।
रजस्वलाविधिं प्राहुर्मैथुनाह्नानवर्जितम् ॥ १३१ ॥

प्रसूतायामिति। प्रसूताशब्देन पुत्रजननिमित्तकविंशतिदिनात्मककर्मानधिकाररूपाशौचवती लक्ष्यते*। कन्याजननप्रयुक्तैकमासात्मकत्वं कन्याजनौ। अशक्ता असमर्था रोगादिना। अपेता। इण गतौ। अप दूरं इता गता। अप दूरप्रसर्पणे इति विश्वः। मृतायामिति यावत्। चकारात् प्रोषिता पतिताऽपि संगृह्यते। केचन आचार्याः। अत्र कश्चिदिति वक्तव्ये बहुवादिसम्मतिदर्शनद्वारा स्वाभिमतत्वयुक्तत्वे व्यञ्जयन् केचनेत्याह।

अस्तु रजस्वलाधर्मातिदेशार्थमाह। रजस्वलेति। रजस्वलायां सत्यां योविधिः कल्पे दृष्टः स एवात्र प्रसूतादिषु प्राहुः। तामपरुध्य यजेतेत्यादिकः। पत्नीकर्मलोपपत्तो योऽत्रासादनादिरूपो वा पक्षः। उभयरूपोविधिरिति यावत्। श्रूयते चापस्तम्बसूत्रे मैथुनाह्वानसंज्ञकं कर्म, तस्यादृष्टार्थत्वमाशङ्क्य रजस्वलाधर्मातिदेशाच्च प्राप्तं परिहरति। मैथुनेति। मैथुनार्थमाह्वानं मन्त्रकरणकं शास्त्रेणोपदिष्टम्। तद्विहायान्यत् प्रसूतादिषु भवतीत्यर्थः। तस्य दृष्टार्थत्वे सति पुरुषार्थत्वादिति भावः। ननु न देवताग्निशब्दक्रियाः परार्थत्वादिति प्राक् प्रपञ्चितम्। तत्र मन्त्राणां प्रतिनिधिर्न वेति सन्देहे भियते सामान्यतः प्रतिनिधिः स्यात्। आरम्भनियमः दोषस्यासमाप्तौ† ॥१२१॥

---

* लभ्यते, — इति क॰ पुस्तके पाठः।

† अत्र कियान् ग्रन्थस्त्रुटित इति प्रतिभाति।



होतुर्याज्याऽनुवाक्यासु विस्मृतिर्यदि जायते।
तदाऽऽग्नेयीभिरैन्द्रीभिः प्राजापत्याभिरेव च ॥१३२॥
यजेद्याज्यानुवाक्याभिर्व्याहृतीभिरथापि वा।
अनुमन्त्रणमन्त्रेषु याजमानेषु विस्मृतौ ॥ १३३ ॥
तदा व्याहृतिभिः कुर्य्यात् स्वामी तदनुमन्त्रणम्।
दीक्षावेदनसुब्रह्मण्यादिकार्य्येष्वशेषतः ॥ १३४ ॥
पित्रादीनां सुतादीनां मध्ये यन्नामविस्मृतौ।
अज्ञातं यस्य वा नाम निर्दिशेत्तं तमेव वा ॥ १३५ ॥
जातिनक्षत्रगोत्रानुष्ठानान्यतमसंज्ञया।
तथेष्टौ प्रियपुत्रस्य पित्रादीनां पितृक्रतौ ॥ १३६ ॥
छिन्नं लूनञ्च पिष्टञ्च सान्नाय्यं मृन्मयं तथा।

होतुरिति। याज्या नाम हविस्त्यागार्था ऋचः। अनुवाक्यास्तु देवताह्वानार्थाः। तद्विस्मरणे आग्नेय्यादीनामन्यतमाभिर्ऋग्भिर्व्याहृतिभिर्वा यजेत्। यद्यपि मन्त्रे प्रतिनिधिर्नेत्युक्तं, तथापि वचनात् क्वचित्तथात्वमादरणीयम्। स्पष्टमन्यत्। नामाधिकृत्याह। दीक्षेति॥ पित्रादीनामिति। पित्रादीनां पुत्रादीनां वा कस्य चिन्नाम्नोविस्मरणे प्रमादादनिर्देशे वा समस्तस्यैव वाक्यस्य तन्नाममात्रस्य वा निर्देशः कार्य्यः ॥१२२॥१२३॥१२४॥१२५॥

नामविस्मरणे निर्देशप्रकारमाह। जातीति ॥१२६॥

छिन्नमिति। यथाविध्यनुत्पाद्य लोकसिद्धस्येदृशस्यैव यात्तदा

लोकसिद्धं गृहीतव्येमन्त्रा जप्याः कठाश्रयात् ॥ १३७॥
छिन्नादि लोकसिद्धं चेदाद्रियेत क्रतुं प्रति ।
तत्तन्मन्त्रजपं प्राह भरद्वाजः कृताकृतम् ॥ १३८ ॥
छिन्ने चावहते लूने पिष्टे दग्धे च मृन्मये ।
खाते च लौकिके प्राप्ते जपो नास्त्येव वाजिनाम् ॥१३९॥
उक्तानि परिमाणानि वेदेरप्यग्निसद्मनाम् ।
तदसम्भवतो ह्रासं कुर्य्यादर्थाविरोधतः ॥ १४० ॥
अङ्गुलस्य प्रमाणं तु व्याख्यातमनलाहितौ ।
तस्यासम्भवतस्तिर्य्यग्यवचितयमङ्गुलम् ॥ १४१ ॥

प्रयोगकाले तत्तन्मन्त्रा जप्याः ॥१३७॥

मतान्तरमाह छिन्नादीति । तथाच भरद्वाजमते तत्तन्मन्त्रान् जपेद्वा न वा जपेत् ॥१३८॥

मतान्तरमाह । छिन्ने इति। तथाच कठानां मन्त्रजपो नियतः, भरद्वाजीयानां कृताकृतः, वाजिनान्तु न भवत्येव ॥१३९॥

उक्तानीति । वेदेरग्निस्थस्य च शास्त्रोपदिष्टपरिमाणासम्भवे यावता परिमाणेन प्रयोजनं निर्व्वहति तावत्परिमाणं ह्रस्वमपि कुर्व्वीत ॥१४०॥

अङ्गुलस्येति । यथोक्तपरिमाणासम्भवे तिर्य्यक्स्थापितयवचितमेवाङ्गुलपरिमाणं भवति ॥१४१॥



वेदिसम्मानार्थाय रज्जोराकर्षणे यदि ।
महीतलं न पर्य्याप्तं तत्रेमं विधिमाचरेत् ॥ १४२ ॥
श्रोण्यंसदेशान्तरालसमाचीं रज्जुं विधाय तु ।
तस्य द्वादशकं भागमपरं तत्र निक्षिपेत् ॥ १४३ ॥
रज्जुस्तयोर्दशांशेन शङ्कौ न्यस्ता यथा स्पृशेत् ।
श्रोण्यंसयोरन्यतरं तावद्दूरे निहन्ति तौ ॥ १४४ ॥
शङ्कुदक्षिणश्रोण्यंसौ दक्षिणेन ततस्तयोः ।
शङ्कोर्निक्षिप्य तत्पाशौ तां रज्जुं तदनन्तरम् ॥१४५॥
श्रोणिं प्रति समाकृष्य तत आरभ्य चांसतः ।
हढकार्य्यं लिखन्नेव वेदिं दक्षिणतो नमेत् ॥ १४६ ॥
एवमुत्तरतो नामः पूर्व्वपश्चिमतोऽपि च ।
यस्यां दिशि नमेद्वेदिस्तस्यां श्रोण्यंसतो बहिः ॥ १४७॥
श्रोणिभ्यां च तथांऽशाभ्यां द्वौ द्वौ शङ्कू बहिः क्षिपेत् ।
रज्जुर्द्वयोर्द्वयोः शङ्क्वोः पूर्ववत् न्यस्य नामयेत् ॥१४८॥
पूर्वपश्चिमयोरज्जुस्तत्तन्मानानुसारिणी ।
तत्तद्रज्ज्वनुसारेण तत्तच्छङ्कोर्बहिः क्रिया ॥ १४९ ॥

वेदीति । एषा च प्रक्रिया याज्ञिकेभ्योऽवगन्तव्या ॥१४२॥
१४३॥१४४॥१४५॥१४६॥१४७॥१४८॥१४९॥

मुख्यकाले यदाऽवश्यं कर्म्म कर्त्तुं न शक्यते ।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशो भवेत् ॥ १५० ॥
आ सायमाहुतेः कालात् कालोऽस्ति प्रातराहुतेः ।
प्रातराहुतिकालात् प्राक् कालः स्यात् सायमाहुतेः ॥ १५१
पौर्णमासस्य कालोऽस्ति पुरा दर्शस्य कालतः ।
पौर्णमासस्य कालात् प्राग्दर्शकालोऽपि विद्यते ॥ १५२ ॥
वैश्वदेवस्य कालोऽस्ति प्राक् प्रघासविधानतः ।
प्रघासानां च कालोऽस्त्या साकमेधीयकालतः ॥ १५३ ॥
स्यात् साकमेधकालोऽप्या शुनासीरीयकालतः ।
शुनासीरीयकालोऽप्या वैश्वदेविककालतः ॥ १५४ ॥
श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः ।
प्राग्यष्टुं युज्यतेऽवश्यं न त्वत्राग्रयणात्ययः ॥ १५५ ॥
दक्षिणायनकाले या पश्विज्या योत्तरायणे ।

अथेदानीं कालातिपाते विधिमाह । मुख्येति । अवश्यमित्यनेन काम्यानां कालातिपाते लोप एवेति ध्वनितम् ॥ १५० ॥

आ सायमिति । सायमाहुतिकालपर्य्यन्तमित्यर्थः । तत्पूर्व्वमिति यावत् । एवमुत्तरत्रापि । श्यामाकैरिति । तथा च व्रीहियागकालात् पूर्व्वकालः श्यामाकयागस्य, यवयागकालात् पूर्व्वकालः व्रीहियागस्य, श्यामाकयागकालात् पूर्व्वकालस्य यवयागस्य गौणकाल इत्यर्थः ॥ १५१ ॥ १५२ ॥ १५३ ॥ १५४ ॥ १५५ ॥ १५६ ॥



अन्योन्यकालतः पूर्वं यष्टुं युक्ते उभे अपि ॥ १५६ ॥
एवमागामियागीयमुख्यकालादधस्तनः ।
स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्म्मणः ॥ १५७ ॥
यदाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत् ।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि ॥ १५८ ॥
गौणेष्वेतेषु कालेषु कर्म्म चोदितमाचरेत् ।
प्रायश्चित्तप्रकरणे प्रोक्तां निष्कृतिमाचरेत् ॥ १५९ ॥
प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ।
नित्येष्टिमग्निहोत्रं च भरद्वाजीयभाष्यतः ॥ १६० ॥
मुख्यकाले हि मुख्यं चेत् साधनं नैव लभ्यते ।
तत्कालद्रव्ययोः कस्य मुख्यत्वं गौणताऽपि वा ॥ १६१ ॥

कतिचिदुदाहरणानि प्रदर्श्येदानीं सामान्यत आह । एवमिति ॥ १५७ ॥

मतान्तरमाह । यदेति । अन्तरालवत् मध्यकालस्येव ॥ १५८ ॥

गौणकालेऽपि प्रायश्चित्तं कृत्वैवातिपतितं कर्म्म कर्त्तव्यमित्याह । गौणेष्विति ॥ १५९ ॥

मतान्तरमाह । प्रायश्चित्तमिति । प्रायश्चित्तमकृत्वैव नित्येष्टिमग्निहोत्रञ्च गौणकाले कुर्य्यादिति भरद्वाजसूत्रभाष्यकृतां मतम् ॥ १६० ॥

कालद्रव्ययोः कस्य प्राधान्यमिति पृच्छति । मुख्येति ॥ १६१ ॥

मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनम् ।
न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम् ॥ १६२ ॥
एकपक्षगतो यावान् होमसङ्घोऽतिपद्यते ।
पक्षहोमविधानात्तं हुत्वा तन्तुमतीं यजेत् ॥ १६३ ॥
स्वकालोत्कर्षतः कश्चिद् गौणकालो निरूपितः ।
अपकर्षादथान्योऽपि गौणकालो निरूप्यते ॥ १६४ ॥
आमयाव्यार्त्तिमानापद्गतो वाऽध्वगतोऽपि वा ।
राष्ट्रभ्रंशे धनाभावे गुरुगेहे वसन्नपि ॥ १६५ ॥
अन्येष्वेवंप्रकारेषु निमित्तेष्वागतेषु च ।
समासमग्निहोत्राणां यथासम्भवमाचरेत् ॥ १६६ ॥

उत्तरमाह। मुख्येति ॥ १६२॥

अथेदानीं पक्षहोममधिकृत्याह । एकेति । अतिपद्यते लुप्यते । अतिपत्स्यते इति तु समीचीनः पाठः । तं होमसङ्घम् । तन्तुमती नाम प्रायश्चित्तेष्टिविशेषः ॥१६३॥

स्वेति । पूर्व्वं स्वकालोत्कर्षेण स्वकालात् परत इत्येतत्, पूर्व्वस्य कर्म्मणो गौणकालो निरूपितः, अथेदानीं स्वकालात् पूर्व्वतोऽपि गौणकालो निरूप्यते ॥१६४॥

तत्र निमित्तान्याह । आमयावीत्यादिना । समासः सङ्क्षेपः ॥ १६५॥१६६॥



निमित्तानामिहैतेषां निर्दिश्यैकं यदुच्यते ।
तत्सर्वेषु निमित्तेषु जानीयात् प्रतिपादितम् ॥ १६७॥
पक्षहोमानशेषान् वा शेषहोमानथापि वा ।
समस्य जुहुयात्तत्र प्रयोगोऽयं निरूप्यते ॥ १६८ ॥
प्रतिपद्युन्नयेत्सायमापद्यन्यत्र वा दिने ।
यावन्त्यौपवसथ्याहात् प्राग्दिनानि भवन्ति हि॥१६९॥
तावन्ति परिगृह्णीयाच्चतुरुन्नयनानि च ।
पात्रान्तरसहायायां नित्यायां प्राकृतस्रुचि ॥ १७० ॥
स्थूलं स्रुगन्तरं वाऽपि कृत्वा तत्र समुन्नयेत् ।
एका समित् सकृद्धोमः सकृदेव निमार्जनम् ॥ १७१ ॥
उपस्थानं सकृत्कार्य्यं शेषा प्रकृतिरिष्यते ।

निमित्तानामिति। एषां निमित्तानां मध्यादेकं निमित्तं निर्दिश्य यदुच्यते, तत् सर्व्वेषु निमित्तेषूक्तं जानीयात् ॥१६७॥

पक्षेति। तत्रायं वक्ष्यमाणः प्रयोगो निरूप्यते ॥१६८॥

प्रतिपदीति। औपवसथ्याहात् पर्व्वदिनात् प्राक् यावन्ति दिनानि, तावन्ति चतुरुन्नयनानि प्रतिपदि दिनान्तरे वा सायं गृह्णीयात्। एकस्यां स्रुचि तावतामसमावेशमाशङ्क्याह। पात्रान्तरसहायायामिति। स्रुचि पात्रान्तरे स्रुचं स्थापयित्वा तत्र चतुरुन्नयनानि गृह्णीयादित्यर्थः ॥१६९॥१७०॥

मतान्तरमाह। स्थूलमिति। समुन्नयेदिति तावन्ति चतुरुन्नयनानि इत्यनेन संबध्यते। होमप्रकारमाह। एकेति ॥१७१॥

अमुनैव प्रकारं प्रातर्होमेऽप्यतिदिशति ।

**एवमेवोत्तरस्याह्नि प्रातर्होमान् समस्य तु ॥ १७२ ॥**
**जुहुत्यौपवसथ्याहःप्रातर्होमावधीन् सकृत् ।**

एवमिति । उत्तरस्याह्नि द्वितीयदिने । प्रातर्होमान् कीदृशान्? औपवसथ्याहः पर्वदिनं, तत्कालीनप्रातर्होमपर्यन्तान् समस्य, तावतां चतुरवत्तनानां समासं कृत्वा, सकृदेकेन प्रयत्नेन जुहोति । यत्तु बौधायनीये पर्वहोमपर्यन्तं समासोऽत्र भवतीत्युक्तम् । तस्याग्रे व्यवस्था भविष्यति ॥१७२॥

ततश्च पक्षद्वयोपन्यासार्थमाह ।

**समारोपविधानेन समारोपयतेऽनलान् ॥ १७३ ॥**
**ये धार्यन्तेऽथवा धार्यान्धारयत्येव पूर्ववत् ।**

समारोपेति । समारोपस्य विधानं विधिस्तेनाग्नीन् समारोपयन्ते । बहुवचनोपादानात्केषामित्याकाङ्क्षायामाह । य इति । ये अग्नयो नित्यं धार्यन्ते । तेषामित्यर्थः । ततश्च नित्याजस्राणामग्नि-तन्त्रियादीनां सर्वेष्वग्निषु । अन्यथा गार्हपत्य एवेति भावः । पक्षान्तरमाह । अथ वेति । धार्यान् । गार्हपत्यस्य चयाणां पूर्ववन्नित्यहोमार्थं धारणं यथा प्राप्तं तथैव कृतहोमसमासस्यापि धारणं भवतीति भावः । बहुवचनन्तु, अन्वाहिताजस्राभिप्रायेण । स चायं सार्वप्रायश्चित्तेव भवति । एवं चापदनुसारेण कृतहोमसमासस्य समारोपोऽप्यमुनैव न्यायेन । नित्यं होमिनोऽपि प्रवासामयाविलनि-



मित्तवशाद्धारणाशक्तौ होमप्रयोगमपहृत्य सत्यहं समारोपोऽप्युक्तो भवति । तथा चाथर्वपरिशिष्टे । अत्यशक्तौ काले काले प्रत्यर्पितानि समिधि वाऽऽरोपयेदत्यन्ताशक्तावपत्नस्यापि प्रत्यर्पारोपयेनित्यानि नातिपातयेन्नोत्कर्षेणावरोपयेदिति ॥१७३॥

पक्षहोमप्रकारमुक्त्वा शेषहोमप्रकारमाह ।

**एवं प्रतिपदोऽन्यत्र यदापदुपपद्यते* ॥ १७४ ॥**
**तथैवौपवसथ्याहात् प्राग्यदापद्विनश्यति† ।**
**तृतीयायां चतुर्थ्यां वा पञ्चम्यां वा परत्र वा ॥ १७५ ॥**
**तदादीनां तदन्तानां होमानां स्यात्समस्यता‡ ।**

एवमिति । एवं येन प्रकारेण पक्षहोम उक्तस्तेनैव प्रकारेण शेषहोमः कार्य इत्यर्थः । अयन्तु विशेषः । प्रतिपद्व्यतिरिक्तदिने द्वितीयादिषु यस्मिन् दिने चापत्प्राप्तिस्तद्दिनमारभ्य पर्वहोमदिनात् प्राक्, अथवा यद्दिने चापन्निवृत्तिस्तद्दिनपर्यन्तं वा भवति । सर्वोऽप्ययं समस्य होम एव । आपन्निमित्तकोऽद्यादिदिनात्मकोऽपि भवतीत्याह । तृतीयायामिति । स्पष्टम् ॥१७४॥१७५॥

अत्रार्थे कठस्मृतिं दर्शयन्नाह ।

---

* जायते, — इति ग॰ पुस्तके पाठः ।

† तथैवौपवसथ्यात् प्राक् यत्र ह्यापद्विनश्यति, — इति ग॰ पुस्तके पाठः । यदाऽऽपच्च विनश्यति इति ङ॰ पुस्तके पाठः ।

‡ समासता, — इति क॰ ङ॰ पुस्तकयोः पाठः ।

आपदेवावधिर्होमसमासस्याभ्युपेयते ॥ १७६ ॥
तस्मात् कदाचिदारभ्य यावतस्तावतोऽपि वा।
आपत्कालसमान् होमान् समस्येदेकपक्षगान्* ॥१७७॥
अतएव चिरावाय चिरावायाधिकाय वा।
समस्य जुहुयाद्धोमानित्येवं पठ्यते कठैः ॥ १७८ ॥
प्रवासिनोऽग्निहोत्रस्य पञ्चाहं सप्त वा पुनः।
सायं प्रातः पृथग्घोमा एकस्मिन्नहनीति च ॥ १७९ ॥
एवमेकत्र पक्षे ये होमास्तेषामशेषतः।
न्यूनानां वा समासः स्यान्न पक्षान्तरवर्तिभिः ॥ १८० ॥
सर्वथौपवसथ्याहे सायं होमः पृथग् भवेत्।
तथैव यजनीयाहे प्रातर्होमो भवेत् पृथक् ॥ १८१ ॥

आपदिति। अवधिरारम्भसमाप्त्योः। ननु होमसमासस्यापदवधित्वेन दीर्घापदि तावत्कालं होमसमास इत्यत आह। एकपक्षगानिति। तत्स्वरूपमाह। अतएवेति। स्पष्टम्। प्रवासनिमित्तविशेषेण समासे विशेषमाह। प्रवासिन इति। उपसंहरति। एवमिति। एकपक्षे ये होमास्तेषां मध्ये अशेषतः अशेषाणां न्यूनानां वा समासः। न तु पक्षहोमाख्यया पक्षान्तरवर्त्तिभिर्दिनैः सह समासः। तत्र हेतुमाह। सर्वथेति। सर्वथा महापत्त्वेऽपि। औपवसथ्याहे पर्व्वदिने सायंहोमः पृथक्, न समासेन। तथैवापत्त्वेऽपि

* संक्षिपेदेकपक्षगान्,– इति ग० पुस्तके पाठः।



यजनीयाहे यागदिने प्रातर्होमः पृथक् भवेत्। तथा च सायं समासहोमानां चतुर्दशीसायंहोमान्तानां समासः। एवं पर्वप्रातर्होमान्तानां च प्रातर्होमानां समासः। न ततः परम्। औपवसथ्याहे पर्वदिने ॥१७६॥१७७॥१७८॥१७९॥१८०॥१८१॥

पर्वोपवासशून्यश्चेत् प्राप्तं केनापि हेतुना।
तदा तत्सायंहोमोऽपि पूर्वैः सह समस्यते ॥ १८२ ॥

यदा दैवान् मानुषाद्वा प्रतिबन्धात्पर्वणि यमनियमाकरणे तु पर्वसायंहोमोऽपि पूर्वैः सह समस्तो भवति। एकपक्षगतत्वात्। प्रातर्होमस्तु पृथगेव। अन्ये तु पर्वसायंप्रातर्होमावपि पूर्वैः सह समस्तौ। समासस्यापन्निमित्तकत्वात् ॥१८२॥

तावता नापगच्छेच्चेदापत्पक्षान्तरेऽपि च।
पुनस्तत्रापि कर्त्तव्यः समासः पृथगेव हि ॥ १८३ ॥

तावतेति। तत्रापि पक्षान्तरेऽपि ॥१८३॥
पूर्वोक्तमेवानुवदति।

न तु पक्षान्तरस्थानां समासश्चोद्यते मिथः।
एवमापन्नतः पक्षे पक्षे चैवं समाचरेत् ॥ १८४ ॥
तृतीयेऽनन्तरे पक्षे समासं न समाचरेत्।

न त्विति। दीर्घापदि पक्षहोमनियममाह।
एवमिति। स्पष्टम् ॥१८४॥

ननु निमित्तसत्त्वे किं कार्य्यमत आह ।

तावता नापगच्छेच्चेदापत्पक्षे तृतीयके ॥ १८५ ॥
कृच्छ्रेणापि विनिवर्त्त्य तत्र होमान्दिने दिने ।
पक्षान्तरे पुनः कामं पक्षहोमादिमाचरेत्* ॥ १८६ ॥
कठैः पक्षद्वयन्त्वेव† पक्षहोमो विनियम्यते ।

तावतेति । कृच्छ्रेण सङ्कटेन । एवमपि आपदनिवृत्तौ चतुर्थ-पक्षे पुनः पक्षहोमः कार्य इत्याह । पक्षान्तरे इति । तत्र कठस्मृतिमाह । पक्षद्वयमात्रं पक्षहोमो भवतीति नियमात् ॥१८५॥१८६॥

अन्याचार्यमतमुत्थापयति ।

आपच्चेदनुवर्त्तेत दीर्घकालं कदाचन ॥ १८७ ॥
यावज्जीवमविच्छिन्नान् पक्षहोमान् समाचरेत् ।
आपदेवावधिस्तत्र न पक्षगणनाऽवधिः ॥ १८८ ॥

आपदिति । स्पष्टम् ॥१८७॥१८८॥

समासहोमे प्रकारान्तरमाह ।

अथापरः समासस्य प्रकारः प्रतिपाद्यते ।
सायंप्रातस्तनौ होमावुभौ सायं समस्य तु ॥१८९॥
आपन्नोजुहुयात्तत्र समिदेकाऽथवा द्वयम् ।

* पक्षहोमादि चाचरेत्, — इति ख० पुस्तके पाठः ।

† पक्षद्वयं यावत्, — इति ग० पुस्तके पाठः ।



अथेति । सायंप्रातर्होमौ सायं समस्य होतव्यौ । समिच्चैका-द्वे वा भवतः । उभयथा श्रवणात् ॥१८९॥

तन्त्रे विशेषमाह ।

सायंहोमस्य मुख्यत्वात्तदीयं तन्त्रमिष्यते ॥ १९० ॥
चतस्र आहुतीः कुर्यात् तत्र द्वे सायमाहुती ।
द्वे प्रातराहुती सायंहोमे चैका समिद्यदि ॥ १९१ ॥
समित् कृता द्वितीया चेत् सा भवेत् प्रातराहुतौ ।
द्विःसायंहोमवन्मृज्याद्द्विःप्रातर्होमवत्स्रुचम् ॥१९२॥
भक्षमन्त्रे भवेदूह आग्नेयं सौर्यमित्यपि ।
उपस्थानं सकृत्कार्यं शेषं प्रकृतिवद्भवेत् ॥ १९३ ॥
केचिद्द्वे आहुती हुत्वा संविश्यैव निमील्य वा ।
विच्छिद्यैतावता* होमौ कुर्याद्द्वे आहुती ततः ॥१९४॥
कल्पभाष्ये पुनश्चान्यदापत्कल्पान्तरं स्थितम् ।
पक्षहोमादिकाः पूर्वमापत्कल्पा निरूपिताः ॥ १९५ ॥
सायंप्रातःकालभेदसंपाद्याः सर्व एव ते ।
आपद्गुरुत्वमालोच्य कदाचित्सायमेव ते ॥ १९६ ॥
उभयेऽपि समस्यन्ते सायंप्रातस्तना अपि ।
इत्थं समस्तहोमानां† समासान्तरमापदि ॥ १९७ ॥

* विच्छिद्य तावता, — इति क० पुस्तके पाठः ।

† समस्य होमानां, — इति ग० पुस्तके पाठः ।

सायन्तनान् समस्यादौ सर्वान् प्रातस्तनानपि ।
पुनस्तानुभयान् सायं समस्येदुक्तमार्गतः ॥ १९८ ॥

सायमिति ।

सायमादिप्रातरन्तमेकं कर्म्मप्रचयते इत्युक्तत्वात् कर्म्मणः साय-मुपक्रमत्वेन सायंहोमस्य मुख्यत्वम् । चतस्र इति । यद्येका समित् क्रियते तदा सा सायंहोमे होतव्या । समिद्द्वयपक्षे त्वेका सायंहोमे प्रातर्होमे चैका होतव्या । स्रुचं च वारद्वयं सायंहोमवत् वारद्वयं च प्रातर्होमवत् मृज्यात् ॥१९०॥१९१॥१९२॥

विशेषान्तरमाह । अत्रेति । मतान्तरमाह । केचिदिति । आहुरिति शेषः । आहुतिद्वयहोमानन्तरं संवेशं निमीलनं वा कृत्वा तावतैवापराहुतिद्वयेन विच्छेदं सम्पाद्यापराहुतिद्वयं होतव्यं न तु नैरन्तर्य्येणेति भावः ॥१९३॥१९४॥

मतान्तरमाह । कल्पेति । आपत्कल्पेऽपि समस्यमाना होमाः सायंप्रातःकालभेदेन सम्पादनीयाः । सायंहोमाः सायं, प्रातर्होमाश्च प्रातः सम्पाद्या इत्यर्थः । आपदो गौरवातिरेके तु सायमेवोभयहोमाः कर्त्तव्याः । तत्रापि प्रकारमाह । सायन्तनानिति ॥ १९५॥१९६॥१९७॥१९८॥

पक्षहोमे हि तत्रैकमुदाहृत्योच्यते मनाक् ।
चतुरन्वयनान्यस्मिन्नष्टाविंशतिरन्वयेत् ॥ १९९ ॥
चतुर्वा कृत्वा जुहुयात् षट्पञ्चाशतमाहुतीः ।
प्रक्षेपास्तत्र चत्वारः प्रतिप्रक्षेपमाहुतीः ॥ २०० ॥



मन्त्रेण* जुहुयादिद्धांश्चतुर्दश चतुर्दश ।
पक्षहोमसमं शेषं सायं प्रातः समाचरेत्† ॥ २०१ ॥
सर्व‡दिराघहोमादावभ्यूह्यमिदमीदृशम् ।
कठा अप्येवमेवार्थमङ्गीकुर्वन्ति केचन ॥ २०२ ॥
दीर्घकालापदं मत्वा पक्षहोमे हुते सति ।
तत्रान्तराले यद्यापत्कदाचिदपगच्छति ॥ २०३ ॥
काले काले पुनर्होमान् जुहुयात् प्राग्घुतानपि ।
कठेष्वेवं विदुः केचिन्नेच्छन्त्यन्ये पुनर्हुतिम् ॥ २०४ ॥
यावन्तोऽत्र समासास्ते सर्वे सायमुपक्रमाः ।
प्रातःकालापवर्गाश्च न तु प्रातरुपक्रमाः ॥ २०५ ॥

तमेव प्रकारमुदाहरणोपन्यासेन विशदयति । पक्षेति ॥१९९॥२००॥२०१॥

अमुमेव प्रकारमन्यत्रातिदिशति । सर्व्वेति ॥२०२॥

यदा तु दीर्घकालीनामापदमवधार्य्यापकर्षरीत्या पक्षहोमाहुताः परतस्तु पक्षमध्य एवापदपगता, तत्र मतभेदेन व्यवस्थाभेदमाह । दीर्घेति ॥२०३॥२०४॥

होमसमासस्यौत्सर्गिकीं रीतिमाह । यावन्त इति ॥२०५॥

* तन्त्रेण, — इति क० पुस्तके पाठः ।
† समासवत्, — इति क० पुस्तके पाठः ।
‡ सर्व्वं, — इति क० पुस्तके पाठः ।

प्रातर्होमादिका यद्वा समासा इति भाषितम् ।
कल्पव्याख्यातृभिः कैश्चित् प्रातश्चेदापदागता ॥२०६॥
तथा पूर्वापराह्लादि* निमित्तेऽथ समस्यति ।
पूर्वपक्षे तु रात्रौ चेन्मृतिशङ्काऽग्निहोत्रिणः ॥ २०७ ॥
सायं हुत्वा तदैवाथ जुहुयात् प्रातराहुतीः ।
यदि त्वपरपक्षे स्यान्मृतिशङ्काऽग्निहोत्रिणः ॥ २०८ ॥
हुतावशिष्टाः पक्षेऽस्मिन् जुहुयात् सकलाहुतीः ।
दर्शेष्टिश्च तदा कुर्यादिष्टिर्यदि न सम्भवेत् ॥ २०९ ॥
देवतानां प्रधानानामेकैकस्य पृथक् पृथक् ।
पुरोनुवाक्यायाज्याभ्यां चतुरात्तघृताहुतीः ॥ २१० ॥

यदि तु प्रातरापदागच्छति तदाऽपि पूर्व्वमते सायमुपक्रम एव होमसमासः प्राप्नोति, तच्च मतान्तरेण प्रातरुपक्रमत्वमाह । प्रातरिति ॥२०६॥

अग्निहोत्रिणोमरणशङ्कायां विशेषमाह । पूर्व्वपक्षे इति । पूर्व्वपक्षे शुक्लपक्षे ॥२०७॥२०८॥

इष्ट्यसम्भवे चाह । इष्टिरिति ॥२०९॥

चतुरात्तं चतुरवत्तं घृतं तदाहुतीः पृथक् पृथक् जुहुयात् ॥२१०॥

* पराह्लादौ, — इति क० पुस्तके पाठः ।



जुहुयादेवमन्यच्च सर्वंचापदि हूयते ।
अथेष्ट्ययनमध्ये स्यात् पत्युर्मरणसंशयः ॥ २११ ॥
अवशिष्टेष्टिदेवेभ्यस्तत्सङ्ख्यानि घृतानि च ।
चतुर्गृहीतान्येकच गृहीत्वा चमसे सह ॥ २१२ ॥
पुरोनुवाक्यायाज्याभिः पूर्ववज्जुहुयात् पृथक् ।
चातुर्मास्यान्तराले चेत् स्वामिनो मृतिशङ्कनम् ॥२१३॥
तच्चान्यपर्वपर्यन्तमग्निहोत्राख्यशेषतः ।
तदैव कुरुते दर्शान् पौर्णमासान् बहूनपि ॥ २१४ ॥
चातुर्मास्यावशिष्टानि पर्वाण्यच समापयेत् ।
पश्वलाभे पुरोडाशं निर्वपेत् पशुदैवतम् ॥ २१५ ॥
आमिक्षामथ वा कुर्यात् पूर्णाहुतिमथापि वा ।

अथेति । तत्सङ्ख्यानि देवतासङ्ख्यानि चतुर्गृहीतानि घृतानि पुरोनुवाक्यायाज्याभिः पृथग् जुहुयात् ।

चातुर्मास्ययागमध्ये यजमानमरणशङ्कायामाह । चातुर्मास्येति । अन्यपर्व्वपर्य्यन्तं चातुर्मास्ययागीयान्यपर्व्वपर्य्यन्तम् ॥२११॥२१२॥२१३॥२१४॥

यदि तु तदानीं पशुर्न लभ्यते तदाऽपि प्रतिनिधिना निर्वर्त्तनीयमित्याह । पश्वलाभे इति । सर्व्वासम्भवे पूर्णाहुतिः कर्त्तव्या । तावतैव सर्व्वं निर्वहति ।

आहिताग्निः कदाचित्तु कृष्णपक्षे मृतो यदि ॥२१६॥
तदा शेषाहुतीः सर्वा जुहोतीत्याश्वलायनः ।
अन्ये तदैव दर्शेष्टिं कुर्युः कृष्णे मृतस्य तु ॥ २१७ ॥
शुक्लपक्षे निशि प्रेतस्येच्छन्ति प्रातराहुतिम् ।
एवं प्रतिनिधिः प्रोक्तस्तत्कार्ये च विधिः पृथक् ॥२१८॥
अवशिष्टोऽत्र यः कश्चित् स्वे स्वे स्थाने वदामि तम् ॥

आश्वलायनसम्मतिमाह । आहिताग्निरिति ।

अत्रैव मतान्तरमाह । अन्ये इति ॥२१५॥२१६॥२१७॥

प्रतिनिधिप्रकरणमुपसंहरति । एवमिति । प्रतिनिधिस्तन्निर्वर्त्त्ये कर्मणि विधिश्चोक्तः । न्यूनतापरिहारार्थमाह । अवशिष्ट इति ॥२१८॥

इति वादिभटमुद्गरकुठार श्रीकुमारस्वामिसूरिसुत-त्रिकाण्डमण्डनभास्करमिश्रसोमयाजिकृतापस्तम्बसूत्र-ध्वनितार्थकारिकासु प्रतिनिधिनिरूपणं* समाप्तम् ॥

---

*प्रतिनिधिनिरूपणं कार्य्यनिरूपणं, — इति क० पुस्तके पाठः ।



# तृतीयकाण्डम् ।

श्रीगणेशाय नमः ।

ॐ नमो विश्वेश्वराय ।

---

नो दृष्टं गुरुसम्मुखं श्रुतिमुखं नो दर्शनानां मुखं
नो वा वादिमुखं न याजकमुखं नो वा क्रियाणां मुखम् ।
स्फूर्जत्संशयजातजालमथनव्यापारपारङ्गमं
विद्वन्मण्डनमण्डनं कथमहो व्याख्यातुमाचक्ष्महे ॥१॥
क्वाहं मन्दमतिः क्वेदमकूपारविलोडनम् ।
तथापि साहसं कुर्वे तत्सन्तः क्षन्तुमर्हथ ॥२॥

एवं प्रतिनिधौ निरूपिते मुख्यालाभे प्रतिनिधिनाऽप्यननुष्ठितासु क्रियासु ।

उपघातः क्रियालोप उपेक्षा च प्रमादतः ।
चतुर्विधमिदं प्रोक्तं पुनराधानकारणम् ॥
प्रसिद्धः कर्मणां लोप उपघातोऽन्त्यजादिना ।
उपेक्षा च प्रवासेन प्रमादोऽग्नेरधारणम् ॥

इति वचनात् क्रियालोपवशात् पुनराधानं प्राप्नोति । तत्प्रसङ्ग-सङ्गत्या पुनराधाननिमित्तानि कानिचित् पुनराधेयनिमित्तान्यपि वक्तुमारभते ।

**कामे निमित्तयोगे वा पुनराधेयमिष्यते।**
**निमित्तेषु यथायोगमाधानमथवा भवेत्॥ १॥**

काम इति। कामे इति* निमित्तसप्तमीयं विषयसप्तमी वा। कामनायां सत्याम्। वेत्यथवा। निमित्तस्य यस्योभावग्नी इत्यादिकस्य योगे प्राप्तौ सत्याम्। पुनराधेयं तत्संज्ञकं काम्यं नैमित्तिकञ्च कर्म इष्यते अङ्गीक्रियते। कल्पकृद्भिरिति शेषः।

कामनायां तावत्। राज्ययशस्कामेति†। अस्यार्थः। राज्ययशस्कामस्य पुनराधेयं भवति। वरुणो हैतद्राज्यकाम आदधे सोमो यशस्काम इति। तथा यशो भवति राज्यं आगच्छति‡ य एवं विद्वानाधत्त इति श्रुतेः।

नैमित्तिकशब्देन केनचिन्निमित्तेन विनष्टस्य पुनः सन्धानात्मकं प्रायश्चित्तापरपर्य्यायं कर्मोच्यते। तच्च भिन्ने जुहोतीत्यादिकम्। भेदननिमित्तेन होमस्य विधानात् तस्य नैमित्तिकत्वम्। पुनराधेयस्यापि यस्योभावग्नी इत्यादिना नष्टस्याग्निनिष्ठाधान§जन्यसंस्कारापूर्वातिशयस्य(१) पुनरग्नेस्तादृशापूर्वोत्पादकत्वेन नैमित्तिकत्वम्। एवमेव पुनराधानस्यापि। पुनराधेयस्य तु पुनः काम्यत्वमपि। तादृशा-

* इति, – इति नास्ति ङ० पुस्तके।
† इत्यमेव पाठः सर्व्वत्र।
‡ गच्छति, – इति ङ० पुस्तके पाठः।
§ नष्टस्याग्निनिष्ठान, – इति ङ० पुस्तके पाठः।

(१) आधानेन हि अग्निनिष्ठः कश्चित् संस्कारापूर्व्वातिशयः जन्यते, अग्निनाशेन स विनश्यति, पुनराधेयाख्येन कर्म्मणा पुनः स संस्कारापूर्व्वातिशय उत्पद्यते।



पूर्वातिशयनाशाभावेऽपि यशस्कामादीन् प्रति विधीयमानत्वात्। पुनराधेयपुनराधाने इति कर्मणोर्नामधेये संव्यवहारार्थे।

पुनराधानस्य तु केवलं नैमित्तिकत्वमेवाह। निमित्तेष्विति। निमित्तेषु जातेषु वेत्यथवा आधानं पुनराधानं भवेत्। सर्वेष्वपि निमित्तेषु पक्षे पुनराधानमेव स्यादत आह। यथायोगमिति। युज्यते अनेनेति योगः धर्मो युज्यते शास्त्रेणातो योगः शास्त्रमिति यावत्। तमनतिक्रम्येति, यथायोगं यथाशास्त्रमित्यर्थः। तथा च शास्त्रेण यस्मिन्निमित्ते पुनराधेयं पुनराधानं वाऽऽम्नातमस्ति तत्र तदेव स्यादिति भावः॥ १॥

पूर्वं यथायोगमित्युक्तं, तदेवासन्दिग्धमाह।

**तत्र येषु निमित्तेषु शृङ्गग्राहिकया विधिः।**
**तत्रैव पुनराधेयमन्यथाऽऽधानमिष्यते॥ २॥**

तत्रेति। तत्र येषु निमित्तेषु शृङ्गग्राहिकान्यायेन विधिः पुनराधेयविधिः प्रोक्त इति शेषः। तत्रैव पुनराधेयं स्यात्। अन्यथा पुनराधेयशब्दाभावे। आधानं पुनराधानमिष्यते अङ्गीक्रियते। याज्ञिकैरिति शेषः। तत्र पुनराधानशब्दे विद्यमानेऽविद्यमाने वा, अतिक्रमे तदाग्नीनां* विनाश इत्यादौ नाशलौकिकादिशब्दैः पुनराधानमेव भवतीति प्रायो वादः†॥ २॥

* अतिक्रामेत्तदाग्नीनां, – इति [illegible]०, ख० पुस्तकयोः पाठः।
† शृङ्गग्रहणमिव शृङ्गग्राहिकेत्यर्थः, – इत्यधिक पाठः क० पुस्तके।

मतान्तरमाह ।

अन्यथाप्यपरे* प्राहुः पुनराधिं विकल्पतः ।
अन्ये तृतीयं नियतमग्न्याधेयं† वितन्वते ॥ ३ ॥

अन्यथापीति । अपरे आचार्या अन्यथापि पुनराधेयनिमित्तेष्वपि विकल्पेनेति विकल्पतः सार्वविभक्तिकस्तस् । पुनराधिं पुनराधानं प्राहुः । द्वयोरप्यग्निनिष्ठसंस्कारोत्पादकत्वमत्वात् । सर्वत्राधेयस्थलेऽपि पुनराधानप्राप्तौ मतभेदेनापवादमाह । अन्ये त्विति । अन्ये आचार्याः नियतं नियमेन, तृतीयं अग्न्याधेयं पुनराधेयमेव, वितन्वते विस्तारयन्ति, कुर्वन्तीत्यर्थः । आधानानन्तरं केनचिन्निमित्तेन पुनराधेयपुनराधानान्यतरस्मिन्‡ कृते पुनः§ पुनराधानस्याधेयस्य वा निमित्तसम्पाते पुनराधेयमेव भवतीति तृतीयशब्दार्थः ॥ २ ॥

तत्र प्रथमं काम्यमेवाह ।

आधाय वत्सरे तस्मिन् वृद्धीच्छौ¶ पुनराहितिः ।
प्रजां पशूंस्तथा पुष्टिमिच्छतामन्यदाऽपि च ॥ ४ ॥

आधायेति । आधाय अग्नीमिति शेषः । आधानं कृत्वेत्यर्थः । तस्मिन् वत्सरे वृद्धीच्छौ वृद्धेर्वित्तस्य इच्छायां सत्याम् । पुनरा-

* अन्यथाऽप्यपरे, — इति ङ० पुस्तके पाठः ।
† नियतमन्याधेयम्, — इति ग० पुस्तके पाठः ।
‡ पुनराधेयपुनराधानान्यतमे, — इति ङ० पुस्तके पाठः ।
§ पुनः, — इति नास्ति क०, ख०, घ० पुस्तकेषु ।
¶ आधानवत्सरे यस्मिन् यदि स्यात्, — इति, आधानवत्सरे यस्मिन् वृद्धीच्छोः, — इति च पाठौ ग० पुस्तके ।



हितिः पुनराधेयं भवति । अपि च अन्यदा वत्सरादूर्द्ध्वमपि प्रजां पुत्रादिसन्ततिं पशून् गवादीन् पुष्टिं पुष्टिजनकान्नादीन् इच्छतां यदा कदाचिदपि पुनराधेयं भवति ॥ ४ ॥

वृद्धिकामत्वेन* पुनराधेयमुक्तमधुना तदेवावृद्धिनिमित्ते नैमित्तिकमाह ।

आधानवत्सरे जातो यद्याधातुरुपद्रवः ।
अवृद्धिर्नाम सा प्रोक्ता तत्र स्यात् पुनराहितिः ॥ ५ ॥

आधानेति । तत्र स्यादिति† । तत्र अवृद्धौ सत्यां, निमित्तसप्तमीयं, पुनराहितिः पुनराधेयं भवतीति शेषः । अवृद्धिलक्षणमाह । आधानेति । आधानस्य वत्सरे वर्षे चेद् यदि आधातुराधानकर्तुर्यजमानस्येति यावत् । उपद्रवो गृहदाहतस्करादिजन्यः । सा अवृद्धिर्नाम प्रोक्ता उक्ता ॥ ५ ॥

निमित्तान्तरमाह ।

यज्ञभागाङ्गवैधुर्याद्यदाधानस्य‡ कारणम् ।
आद्ये संवत्सरे तच्चेत्तदैव पुनराहितिः ॥ ६ ॥

यज्ञेति । यज्ञस्य भागः यज्ञियद्रव्यम् । अङ्गस्य पाण्यादेर्वैधुर्यं राहित्यं नाश इति यावत् । तस्माद्धेतोर्यदाधानस्य कारणं पुन-

* वृद्धिकामत्वे, — इति क० पुस्तके पाठः ।
† तत्र तस्यामिति, — इति ङ० पुस्तके पाठः ।
‡ यदा स्यादङ्गवैधुर्यादग्न्याधानस्य, — इति ग० पुस्तके पाठान्तरम् ।

राधानकारणं निमित्तं कैश्चिदुक्तम् । चेद् यदि तन्निमित्तं आद्ये वत्सरे प्रथमवर्षे जातं, तत्रैव तस्मिन्नेव निमित्ते पुनराहितिः पुनराधेयमेवेति ॥ ६ ॥

पुनराधेयनिमित्तान्येव वक्तुं प्रतिजानीते ।

**तत्रैतानि निमित्तानि सूत्रकारैरशेषतः ।**
**निरूपितानि वक्ष्यामि पुनराधेयकर्मणि ॥ ७ ॥**

तत्रेति । तत्र पुनराधेयकर्मणि सूत्रकारैर्बौधायनादिभिरशेषतः साकल्येन निरूपितानि प्रोक्तानि निमित्तानि वक्ष्यामि । अशेषत इत्यस्य वक्ष्यामीत्यनेनान्वयो वा* ॥ ७ ॥

प्रतिज्ञातमाह ।

**यद्वित्तं जीवनायालं कुटुम्बस्यैकवत्सरे † ।**
**तन्नाशे पुत्रमर्त्यानां ज्ञातीनामवरोधने ॥ ८ ॥**

यदित्यादिपञ्चभिः । यदिति । एकवत्सरे एकवत्सरमभिव्याप्य कुटुम्बस्य वृद्धपित्रादेर्जीवनाय ‡ जीवनं कर्तुं अलं पर्याप्तं यद्वित्तं धनं धान्यादि वा । तन्नाशे चौर्यादिना तदपाये पुनराधेयमिष्यते अङ्गीक्रियते । पुत्राश्च ते मर्त्याश्च पुत्रमर्त्याः पुत्ररूपा मनुष्या-अपत्यानीति यावत् । पुमान् पुत्रो जायते इत्यत्र पुंशब्दश्रवणात्

* वक्ष्यामीत्यन्वयो वा, — इति क०, ख०, घ० पुस्तकेषु पाठः ।
† पुत्रं वाऽस्यैकवत्सरे, — इति ग० पुस्तके पाठः ।
‡ वृद्धमात्रापत्यादेर्जीवनाय, — इति क० पुस्तके पाठः ।



पुत्रशब्दस्यापत्यार्थत्वेन दृष्टत्वात् । तेन स्त्र्यपत्यस्यापि सङ्ग्रहः । कन्या त्वविवाहितैव । करम्भपात्रे विशेषश्रवणेनाविवाहितकन्यासङ्ख्यया कर्त्तव्यत्वेन विहितत्वादिति । पुत्रशब्दस्य सन्ततिवाचकप्रजाशब्दापरपर्यायत्वेन पुत्रपौत्रप्रपौत्रहानौ पुनराधेयमित्यभियुक्ताः ।

कथंभूतानां पुत्रमर्त्यानां? ज्ञातीनां सवर्णजातानामित्यर्थः । अथवा, ज्ञातीनां कुलजातानां पुत्रव्यतिरिक्तानामपि, अवरोधने मरणे निमित्ते पुनराधेयमिष्यते इत्युत्तरश्लोकस्थेनान्वयः । मर्त्यायामिति पाठे मर्त्याशब्देन मृतिः । मरणे इति पाठे तु स्पष्ट एवार्थः । अत्र ज्ञातिशब्देन त्रिपुरुषीति विज्ञायते । सा च स्वपितरमारभ्य वेदितव्या । पुत्रभ्रातृपितृमातृबन्धुपशूनामिति यत्तत्न्मोक्तेः । अङ्गसम्बन्धकारणाद् बन्धुरिति दुर्गवृत्तिकारः । अवरोधनमुपरोधः स च राजादिकृत इत्यापस्तम्बः । बलवद्भिरपरैर्निगृह्यमाणत्वं रुध्यमानत्वं तदेवावरोधनमित्युक्तं श्रीरुद्रदत्तभाष्ये । पूर्वव्याख्यायां गोबलीवर्द्दन्यायेन प्रवृत्तिः * ॥ ८ ॥

**अङ्गनाशेऽङ्गनानाशे पुनराधानमिष्यते ।**
**ज्यानिः सर्वस्वहानिः स्यात् स्पष्टं माध्यन्दिनश्रुतेः ॥ ९ ॥**

अङ्गनाशे इति । तथा अङ्गनाशे पाण्यादिहानौ, अङ्गनानाशे स्त्रीमरणे निमित्ते पुनराधेयमिष्यते । एता निमित्तसप्तम्यः । तथाच प्रतिनिमित्तं नैमित्तिकमावर्त्तते । भाष्ये तु अङ्गनाशब्देन कनिष्ठपत्नी आधानमननुप्रविष्टपत्नी वाऽन्वारम्भणीयोत्तरमजातपूर्ण-

* प्रवृत्तिः, — इति क० पुस्तके पाठः ।

मानस्य ज्येष्ठपत्नी वा पात्येत्युक्तम् । ज्येष्ठपत्न्या दोषविशेषेणानधिकारापत्तावेतदिति स्मृतिचन्द्रिकायाम् । एकवत्सरपर्याप्तद्रव्यहानौ पुनराधेयमथमञ्जसं मन्वानस्य कस्यचिन्मतेनाह । ज्यानिरिति । ज्यानिशब्देन सर्वस्वहानिरुच्यते । इति माध्यन्दिनश्रुतेः सकाशात् स्पष्टम् ॥९॥

**अतोऽल्पद्रव्यनाशे तु पुनराधिर्न तन्मतात् ।**
**अग्नावपहृतेऽग्न्याधिः सत्याषाढादिदर्शनात् ॥ १० ॥**

अत इति । अतः एतस्मादेव कारणात् अल्पद्रव्यनाशे । यस्य यत् सर्वस्वं ततो न्यूनस्वहानौ तन्मताद्धेतोः न पुनराधेयं भवति । तथाच श्रुतिः । योऽग्नीनाधाय सर्वज्यानिं जीयते स पुनरादधीतेति । सर्वस्वशब्दार्थस्तु विश्वजिदधिकरणे ज्ञेयः । सत्याषाढादिदर्शनात् । सत्याषाढः कश्चित् कल्पकारः, स आदिर्यस्य स सत्याषाढादिर्बौधायनमानवादयस्तेषां * दर्शनाच्छास्त्रात् ।

(“दीपको धूपकश्चैव तापार्थं यश्च नीयते ।
सर्वे ते लौकिकाः ज्ञेयास्तावन्नाचापवर्गतः ॥

इदं वचनं चयनविषयमिति मिश्राः ।)† अग्नौ अपहृते चौर्यादिना आन्त्या वा नीते सति अग्न्याधेयं पुनराधेयं भवतीति शेषः ॥१०॥

**प्रमीते पुनराधानमृत्विग्भ्रातृपुरोहिते ।**
**बौधायनमुनिः प्राह नेष्टं सूत्रान्तरेष्विदम् ॥ ११ ॥**

* इत्थमेव पाठः सर्व्वत्र ।
† ( ) एतच्चिह्नान्तर्गतः पाठो नास्ति क०, ख०, घ० पुस्तकेषु ।



बौधायनमुनिः, ऋत्विग्भ्रातृपुरोहिते । ऋत्विक् च भ्राता च पुरोहितश्चेति समाहारद्वन्द्वः । तस्मिन् प्रमीते मृते सति पुनराधानं प्राह । इदं ऋत्विगादिमरणनिमित्तं पुनराधानं कल्पान्तरेषु नेष्टं, न भवतीति भावः ॥११॥

**आधानाद्यामयावित्वे बह्वृचाः पुनराहितिम् ।**
**कथयन्ति प्रतिज्ञातभ्रंशे तामेव वाजिनः ॥ १२ ॥**

आधानेति । आधानस्य आदौ आदिमवर्षे, आमयावित्वे आमयो रोगस्तद्वत्त्वे सति पुनराधेयं बह्वृचाः आश्वलायनाचार्याः कथयन्ति शंसन्ति । अत्रामयशब्देन क्षयादिमहारोगो ग्राह्यः । सामान्यरोगस्य तु नित्यत्वेन(१) नैमित्तिकत्वाभावात् । अतएव यजमानस्य महारोगो वा जायते इति यज्ञतन्त्रोक्तिः सङ्गच्छते । उदरव्याधिरिति वृत्तौ । अन्ये त्वामयो रोग इत्याहुः । तथाच सूत्रम्* । आधानाद्यद्यामयावीति । अत्र यद्यपि प्रथमवर्षे इति सूत्रकृता नोक्तं तथाप्यर्थाल्लभ्यत इत्युक्तं वृत्तौ । नैमित्तिकान्तरमपि तैरेवोदाहृतम् । यदि वाऽर्था व्ययेरन्निति । अस्यार्थः । अर्था पुत्रपश्वादयः यदि व्ययेरन्विपद्येरन्निति । प्रपञ्चितं चैतद्विस्तरतो वृत्तिकृद्भिः । पुत्रपश्वादिविपत्तिनिमित्तस्य पूर्वमुक्तत्वान्नोट्टङ्कितं मूले । तामेव पुनराहितिमेव वाजिनो वाजसनेयिनः, नामैकदेशे नामग्रहणमिति

* तत्सूत्रम्, — इति ङ० पुस्तके पाठः । एवमुत्तरत्र ।

(१) यः कश्चित् स्वल्परोगः शरीरे सर्व्वदैव न्यूनाधिकभावेन वर्त्तते इति भावः ।

न्यायात् । प्रतिज्ञातभ्रंशे प्रतिज्ञातस्य भ्रंशे नाशे सति कथयन्ति । तथाच तत्सूत्रम् । पुनराधेयमाधानाप्रतिज्ञातस्येति । अस्यार्थः । आधानेन लक्षणेन यस्याप्रतिज्ञातमप्रकाश्यमुपजायते स आधानाप्रतिज्ञात इति भर्तृयज्ञाचार्या व्याचक्षते । यस्याधानसमनन्तरमेव प्रतिज्ञातमपगतं स आधानाप्रतिज्ञात इति कर्कः ।

अत्रैवं श्रूयते । यस्याधानमनर्थकं स्यात् स पुनरादधीतेति । तथा, योऽग्नीनाधाय सर्वज्यानिं जीयते स पुनरादधीतेति । सूत्रार्थस्तु, प्रतीतः प्रसिद्धो ज्ञातः प्रतिज्ञातः । प्रादयोगताद्यर्थे प्रथमयेति समासः । यो धनवित्ताध्ययनादिमत्तया प्रसिद्धः पुरुषः, स प्रतिज्ञात उच्यते । न प्रतिज्ञातः अप्रतिज्ञातः । आधानेन लक्षणेन निमित्तेन वा अप्रतिज्ञातः आधानाप्रतिज्ञातः । यः प्रागाधानाल्लब्धप्रतिष्ठोऽपि आधानसमनन्तरं संवत्सरादर्वागेव वित्तमानादिहानेन लाभाभावाद्वा अप्रतिज्ञातोऽप्रसिद्ध इव स्यादप्रतिष्ठ इव भवेत् स एवमुच्यते । तस्येदं दुष्टाग्न्युत्सर्गपूर्वकादुष्टाग्न्युत्पादकं पुनराधेयसञ्ज्ञकं कर्म भवति । तथा चाथर्वणे पठ्यते । आधानादवृद्धिश्चेत् संवत्सरादर्वाग् रोहिण्यामग्निहोत्रमुत्सृज्य पुनर्वस्वोः पुनरादधीतेति । शाङ्खायनश्च । काम्यं पुनराधेयमजानानस्येति । अस्यार्थः । आधानसंस्कृतेष्वग्निषु पुत्रादिप्राप्त्यर्थानि कर्माणि कुर्वन्नपि अग्निदोषाद् यः कामान्न प्राप्नोति सोऽजानन्नित्युच्यते । तस्य दुष्टाग्निपरित्यागेनादुष्टाग्न्युत्पादकतया काम्यं कामेभ्यो हितं पुनराधेयं भवतीत्यर्थः । आपस्तम्बः । अग्नीनाधाय तस्मिन् संवत्सरे यो नर्ध्नुयात् स पुनरादधीत प्रजाकामः पशुकामः पुष्टिकामो आर्त्यां पुत्र-



मर्त्यायाम् । मानवे च । आहितेषु व्यृध्यमानः पूर्वां पौर्णमासीमुपोष्याग्नये वैश्वानराय द्वादशकपालं निर्वपेत् पौर्णमास्यां ज्वलतोविसृजेदग्न्याधेयेन व्याख्यातविकारांस्तु व्याख्यास्याम इति । काठके च । ऋद्धे पुनराधेयमिति । तेन भर्तृयज्ञकृतव्याख्यानं युक्तमिवाभाति ।

अथवाऽयमर्थः । प्रतिज्ञातशब्दः प्रियवचनः । कुतः? एतद्वाऽस्य प्रियतमं* प्रतिज्ञाततमं धाम न यथा प्रियः पुत्रो वा हृदयं वेत्यादौ[1] तथा दर्शनात् । हरिस्वामिभिर्माधवाचार्यैश्च तथैव व्याख्यातत्वाच्च । अतः प्रतिज्ञातं प्रियं, न प्रतिज्ञातमप्रतिज्ञातमप्रियमित्यर्थः । आधानसमनन्तरमेव सर्वस्वहानिपुत्रमरणप्रतिष्ठाहान्याद्यनिष्टदर्शनेनाधानमप्रतिज्ञातमप्रियमनिष्टफलदत्वादवल्लभं यस्य स आधानाप्रतिज्ञातस्तस्य आधानाप्रतिज्ञातस्य पुनराधेयं भवतीति । अयमेव सोज्ज्वलः सूत्रार्थः । पुत्रमर्त्यायामित्यत्र पुत्रशब्दश्चापत्यमात्रवचनः । नारायणवृत्तौ पुमांस एव मे पुत्रा जायेरन्नित्यत्रापत्यवाचित्वोक्तेः । जनयद् बहुपुत्राणीति लिङ्गात् । पुमान् पुत्रो जायत इति च । पौत्री मातामहस्तेनेति मनूक्तेः । पुत्र्या अपत्यमित्यर्थे तु स्त्रीभ्यो ढगिति पौत्रेय इत्यापत्तेः । न चान्तर्वर्तिनीं विभक्तिमाश्रित्य[2] पुंस्त्वविशिष्टस्यैवापत्यस्य प्रतीतिरिति वाच्यम् । निमित्तगतसङ्ख्यालिङ्गयोरविवक्षितत्वेन सिद्धान्तितत्वात्पुत्रशब्दगतं पुंस्त्वमविवक्षितम् ।

* प्रियतमम्, — इति नास्ति क०, ख०, घ० पुस्तकेषु ।

(१) यथा पुत्रः प्रियः हृदयं च प्रियं तथैतत् स्थानं प्रियं न किन्तु अत्यन्तं प्रियमिति श्रुत्यर्थः ।

(२) पुत्रस्यापत्यमित्यत्र विभक्त्यर्थं पुंस्त्वमाश्रित्येत्यर्थः ।

प्रपञ्चितं चैतद्दौहित्रमरण इत्यत्र भास्करभट्टैः । तथाच पुत्रशब्द-स्यापत्यार्थपरतया तन्मर्त्यैव स्त्रिग्धविशिष्टपौत्रपौत्र्यादिमर्त्योऽपि[1] निमित्तं भवितुमर्हतीति भावः ॥१२॥

पुनराधाननिमित्तमाह ।

**उद्धातेऽग्नौ विहारात्प्राङ्मथ्यमानेऽप्यजन्मनि ।**
**लौकाग्न्यादावनिक्षिप्तेऽभ्युदयेऽस्तमयेऽपि वा ॥ १३ ॥**

उद्धातेति । विहारात् प्राक् विहरणात् पूर्वमग्नावुद्धातेऽनुगते सति मथ्यमानेऽप्यग्नावजन्मनि न विद्यते जन्म यस्य तस्मिन्नजन्मनि सति लौकाग्न्यादौ । आदिशब्देनोदपात्रकुशवटुब्राह्मणानां ग्रहणम् । श्रुतिदर्शनात् । अनिक्षिप्तेऽनिधापिते सति अभ्युदयेऽस्तमये वा निमित्ते जाते ॥१३॥

**विशिष्टहेतुनाऽनेन* जातवेदा विनश्यति ।**
**विहारोत्तरकालं वा नष्टौ पूर्वापरानलौ ॥ १४ ॥**

विशिष्टेति । अनेन पूर्वोक्तविशिष्टहेतुना उद्धरणप्राक्कालीनै-काग्न्यनुगमनिमित्तमन्थनाग्न्यजननहेतुकलौकिकाग्न्यादिनिधानरा-हित्यविशिष्टास्तोदयकालरूपनिमित्तेन जातवेदा अग्निर्विनश्यति नाशं प्राप्नोति । अत्राग्निशब्देनाग्निनिष्ठाधानजन्यसंस्कारापूर्वं लक्ष्यते । मुख्याग्नेर्देवतात्वेन नाशासम्भवादन्यथानुपपत्तेः । पुनराधानं भवतीति

* तेन, – इति ग० पुस्तके, तत्र, – इति क०, ख०, घ० पुस्तकेषु पाठः ।

(१) पुत्रमरणमिव पौत्रादिमरणमपीत्यर्थः ।



भावः । अत्राप्यन्तर्गर्भिणीन्यायेन केवलगार्हपत्योपशमे उभावग्नी इत्यादिनिमित्तसंज्ञावेन पुनराधेयमेव केचिद् व्याजह्रुः ।

विहरणात् प्राक् तादृशविशिष्टहेतुनाऽग्निनाश इत्युक्तम् । अधुना विहारोत्तरमपि तादृशेनैव हेतुनाऽग्निनाशो भवतीत्याह । विहारेति । वेत्यथवा । विहारोत्तरकालं यथा स्यात् तथा पूर्वापरौ गार्हपत्याहवनीयौ नष्टावनुगतौ ॥१४॥

**शेषं पूर्वोदितं सर्वं तथाप्यग्निर्विनश्यति ।**
**वैधं काष्ठमनिर्मथ्य प्रागेवाग्न्युदकादिके ॥ १५ ॥**
**विन्यस्तेष्वग्निनाशः स्यादुदयास्तमये सति ।**

शेषं मथ्यमानेऽप्यजननादिकं सर्वं पूर्वोदितं यदि स्यात्तथापि तन्निमित्तेऽपि अग्निद्वयं विनश्यति । अग्निरित्येकवचनं जात्यभिप्रा-येण । न्यायस्य तुल्यत्वात् । विनाशशब्देन पुनराधेयं भवतीत्याह । उभावग्नी इति विशेषश्रवणात् । अत्र विशिष्टहेतावुद्धरणोत्तर-कालीनेति विशेषणीयम् । पूर्वोक्तविशिष्टहेतौ मन्थनाग्न्यजननहेतु-केति विशेषणस्य कृत्यमाह । वैधमिति । उद्धरणात्प्रागुत्तरं वाऽग्ना-वनुगते सति वैधं शास्त्रचोदितं काष्ठमरणिरूपमनिर्मथ्यामथित्वा प्रागेव मन्थनात् पूर्वमेव अग्न्युदकादिके विन्यस्तेष्वपि स्थापितेष्वपि[1] उदयास्तमये जाते नाशोऽग्निनिष्ठसंस्कारध्वंसो भवति । पुनराधेयं भवतीति भावः ॥१५॥

(१) अत्रैकवचनबहुवचनान्तयोरन्वयश्चिन्तनीयः । मन्मतु, विन्यस्तेऽप्यग्नि-नाशः स्यात्, – इति पाठः प्रतिभाति ।

अस्मिन् विषये कर्कमतमाह ।

**कालाल्पत्वे त्वनिर्मथ्य लौकाग्न्यादि क्षिपेद्यदि ॥१६॥**
**उदयास्तमयात् पूर्वं कर्कोऽग्निनाशमिच्छति ।**

कालेति । उद्धरणात् पूर्वमुत्तरं वाऽनुगमे कालाल्पत्वे सति, कालस्याल्पत्वं कालाल्पत्वं स्वल्पकालत्वे सति, अस्तोदयभयान्मन्थनारम्भमकृत्वैव यदि चेत् उदयास्तमयात् पूर्वमेव लौकिकाग्न्यादि क्षिपेत् खरे स्थापयेत् । अस्मिन्निमित्ते कर्काचार्यः अनाशं नाशाभावमिच्छति । मन्थनपर्याप्तकाले सति अनिर्मथ्य हुतेऽपि खरे ऽग्निस्थापने पुनराधेयमेवेति भावः ॥१६॥

मतान्तरमाह ।

**लौकाग्न्यादावलब्धेऽपि पुराऽर्कास्तमयोदयात् ॥१७॥**
**मन्थनारम्भमात्रेण नाशो वृद्धैर्निवारितः ।**

लौकेति । अर्कस्य सूर्यस्यास्तमयोदयात्पुरा पूर्वं लौकाग्न्यादौ, आदिशब्देनोदकादिके अलब्धे सति अप्राप्ते सति *, स्वल्पकालेऽपि मन्थनस्यारम्भमात्रेण केवलेनारम्भेण वृद्धैः पूर्वाचार्यैर्नाग्नेः संस्कारनाशो निवारितः । न भवतीत्यर्थः । तत्प्रयुक्तं पुनराधेयं पुनराधानं वा न भवतीति भावः । किन्त्वनुगमप्रायश्चित्तमेव । मन्थनारम्भस्तु भस्मस्पर्शेन भवतीत्युक्तं नारायणवृत्तौ ॥१७॥

पूर्वमस्तोदयकालीनोभयानुगमस्य निमित्तत्वमुक्तमधुना तज्ज्ञानस्य निमित्तत्वं मतभेदेनाह ।

* अप्राप्ते सति, — इति नास्ति क॰, ख॰, घ॰ पुस्तकेषु ।



**उभयोद्वानविज्ञानादूर्ध्वमर्कोऽस्तमेति चेत् ॥ १८ ॥**
**कर्कोऽग्निनाशमाचष्टे पश्चाज्ज्ञाते न दुष्यति* ।**

उभयेति । उभयस्याग्नेः उद्वानमनुगमस्तस्य ज्ञानाज्ज्ञानानन्तरं अर्कोऽस्तं चेत् एति उदयं प्राप्नोति तदा कर्काचार्योऽग्निनाशमाचष्टे कथयति । पश्चात् अस्तोदयानन्तरं ज्ञाते अनुगमज्ञाने चेन्न दुष्यति दोषयुक्तो न भवति । अर्थादग्निः । पुनराधेयं तदा न भवतीति भावः ॥१८॥

उभयानुगमेऽपि पुनराधेयं नेति मतान्तरेणाह ।

**एकयोनित्वपक्षे तु सर्वाग्न्यनुगमो यदि † ॥ १९ ॥**
**उदयास्तमये चैव नाशमेके न तूभयोः ।**

एकेति । एके आचार्या एकयोनित्वपक्षे, एका योनिररणिर्येषां ते एकयोनयस्तेषां भावस्तत्त्वं तस्य पक्षे, सर्वाग्न्यनुगमः सर्वेषां त्रयाणामग्नीनामनुगमो यदि चेत्, तु पुनरुदयास्तमये च रवेर्जाते सत्येव नाशं वदन्ति । नियोगार्थ एवशब्दः । तु पुनरुभयोर्गार्हपत्याहवनीययोरनुगमे न भवतीत्यर्थः ॥१९॥

तस्मिन्नेव पक्षे सर्वाग्न्यनुगमेऽपि कश्चिद्विशेषमाह ।

**अग्निश्चेदुभयोद्वानेऽभ्युदयास्तमयात् पुरा ॥ २० ॥**
**परोऽग्निरेको जातश्चेत्तावताऽपि न नश्यति ।**
**तदनुत्पादमात्रेण स्यादग्न्याधिनं पूर्वयोः ॥२१॥**

* पश्चाज्ज्ञातेऽपि नेच्छति, — इति ग॰, ङ॰ पुस्तकयोः पाठः ।
† यदा, — इति ग॰ पुस्तके पाठः ।

अस्त इति । उभयोर्नाशे उभयानुगमे चेद्यदि अस्तदिवसक-ज्ञानाभाववानित्यर्थः । उदयास्तमयात् पुरा पूर्वं मन्थनेन लौकिकाग्निस्थापनादिना वा परोऽग्निः पाश्चात्योऽग्निर्गार्हपत्य इति यावत् । एकः केवलश्चेद्यदि जातः पश्चादाहवनीयाद्यनुगमज्ञाने जातेऽपि तावता तन्नाशनिमित्तेन न नश्यति नष्टो न भवति।

तत्रैवं प्रपञ्चः। यस्योभावग्नी इत्यादिना उभयानुगमो निमित्तम्। तत्रोभयत्वस्योद्देश्यविशेषणस्यापि विवक्षितत्वेन सिद्धान्तितत्वान्नैकानुगमे पुनराधानमित्येकः पक्षः । अन्तर्गर्भिणीन्यायेन केवलं गार्हपत्यैकाग्न्यनुगमे पुनराधेयमिति द्वितीयः। कर्कमते तूभयानुगमज्ञानं निमित्तम् । तेनोभयानुगमस्यास्तोदयात् प्राक् ज्ञाने पुनराधेयम् । तदुत्तरं ज्ञाने तु न भवति, किन्त्वनुगमप्रायश्चित्तमेव। केचित्तूभयानुगमस्य भिन्नयोनिपरत्वे निमित्तत्वमभिन्नयोनित्वपक्षे तु सर्वाग्न्यनुगमज्ञानस्य निमित्तत्वमाहुः । अत्रापि यमदूरात् परापश्येदित्यादि बोध्यम् ॥२०॥

तदिति । तस्य गार्हपत्याग्नेरनुत्पत्तिमात्रेण, अनुत्पत्तिरेव अनुत्पत्तिमात्रं, तेनाग्न्याधिः पुनराधेयं भवति पूर्वयोराहवनीयदक्षिणाग्न्योरनुत्पत्त्या नेत्यर्थः ।

अस्तोदयात् पूर्वमकृतोद्धरणस्य गार्हपत्यस्यानुगमे सत्यन्तर्गर्भिणीन्यायेनोभयानुगमाशङ्का कृत्वा चिन्त्येयम् ॥२१॥

**केचित्त्वविहृतावस्थे परेऽग्नावनुगच्छति ।**
**नाधानं मन्वते तत्र नोभयानुगमो हि सः ॥ २२ ॥**



केचिदिति । अविहृतावस्थे, अकृतविहरणा अवस्था दशा यस्य, विहरणात्प्रागिति यावत् । परेऽग्नौ पाश्चात्येऽग्नौ गार्हपत्येऽनुगते सति, केचित् केचन, तु अप्यर्थे, केचिदपीत्यर्थः। तत्र तस्मिन्निमित्ते आधानं पूर्वोक्तं पुनराधेयं न मन्यते। अत्राधानशब्दोऽग्न्युत्पादकत्वेन पुनराधेये उपचर्यते। हि यस्मात् सः उभयानुगमो न, नैवेत्यर्थः ॥ ॥२२॥

यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिरित्यनेनास्तोदयकालीनोभयानुगमननिमित्ते नैमित्तिकत्वेनाम्नातस्य पुनराधेयस्येष्ट्यङ्गभूताग्न्यन्वाधानोत्तरकालीन-तादृशोभयानुगमननिमित्तेऽपि सति निमित्ते नैमित्तिकमिति न्यायेन कर्त्तव्यत्वेन प्राप्तस्य निवृत्तिं बोधयन् निमित्ताभावमाचष्टे ।

**अन्वाहितोभयध्वंसेऽप्यग्निनाशो न विद्यते ।**
**अन्वाहितविधिः कार्यो हव्यवाहद्वये पृथक् ॥ २३ ॥**

अन्विति । अनु अन्वाधानेनाहितः संस्कृतः अन्वाहितोऽर्थादग्निः। तस्योभयं गार्हपत्याहवनीयरूपं, तस्य ध्वंसोऽभावः, स च साऽऽदिरनन्तः[१]। तस्मिन् सति। यद्वा, अन्वाहितात् अन्वाधानानन्तरं उभयध्वंसे सति । अन्वाहितशब्दोऽत्रान्वाधानवचनः अनुपूर्वकस्या-

(१) स च ध्वंसश्च। घटादिध्वंसो हि मुद्गरपातादिना जायते इत्यसौ सादिः। ध्वंसस्तु कदाचिदपि न नश्यति। तन्नाशे घटाद्युन्मज्जनापत्तेः। अतोऽसावनन्तश्चेत्यर्थः।

धानशब्दस्यैवाहितपदस्यान्वाधानवाचकत्वेन विवक्षितत्वात् । अन्वाधानानन्तरमुभयानुगमेऽपि अग्निनाशोऽग्निनिधानजन्यसंस्कारापूर्वनाशो न विद्यते न भवति । तत्प्रयुक्तं पुनराधेयं न भवतीत्यर्थः । अयोद्देश्यविशेषणस्योभयशब्दस्य विवक्षितत्वेन सिद्धान्तित्वानैकतरानुगमो निमित्तमत उभयपदोपादानम् । अपिनाऽस्तोदयकालीनत्वं प्रोच्यते ।

तर्हि तत्र किं स्यादत आह । अन्वाहितेति । अन्वाहितस्याग्नेरनुगमे यो विधिः कल्पसूत्रकृदुक्तः, यदाऽन्वाहितादन्वाधानोत्तरमनुगमे यो विधिर्हव्यवाहद्वये हव्यवाहयोरग्न्योर्द्वयं गार्हपत्याहवनीयरूपं तस्मिन्, पृथगितरानुगमेऽपि प्रत्येकं भवति । अत्रोभयशब्दस्याविवक्षितत्वज्ञापनाय पृथक्पदोपादानम् । अन्यथोभयानुगमे एवान्वाहितविधिना भवितव्यमिति गार्हपत्याहवनीयदक्षिणाग्न्यन्यतरानुगमेऽपि अन्वाहितविधिर्भवति । एष एवान्वाधानोत्तरं प्राक् कर्मापवर्गाद् यदा कदाचिदन्यतरानुगमे द्रष्टव्यः । अन्वाधानञ्च प्रकृतिविकृतिसाधारणमेव ।

अथाग्निहोत्रहोमाङ्गभूतास्विष्टिषु क्रियमाणास्वन्यन्वाधानोत्तरकालीनाग्न्यनुगमे चैतदेव प्रायश्चित्तमन्यदेति सन्देहे, अविशेषादेतदेवेति प्राप्ते, नेति ब्रूमः ।

"अग्निहोत्राङ्गभूतेष्टिमध्येऽप्यनुगमो यदि ।
गृहीतानुगमो न स्यादाधानेष्टिवदत्र तु ॥
साधारण्यं न चेदग्नेर्येन स्यात् पौर्णमासवत् ।
न पुनरुद्धरणमिष्यर्थं किन्तु होमार्थमेव तत् ॥



तस्माद्यथाऽतिथेर्होमकालीनस्य भुजिक्रिया ।
नाग्निहोत्राङ्गमेवं न गृहीतानुगमस्त्विह ॥
किन्त्वनादिष्टमात्रेण पुनरुद्धरणं भवेत्" ।

इति वचनात् अनादिष्टमनुगतप्रायश्चित्तम् । अन्वाहितविधेस्तु कल्पभेदेन नानात्वान्मूले नोक्त इति सङ्क्षेपः ॥२३॥

कश्चिदनुगमभ्रान्त्या कृते मन्थने पूर्वाग्निदर्शने च जाते तत्र किं स्यादिति अनुगमप्रसङ्गान्नैमित्तिकान्तरमाह ।

नाशभ्रान्त्या मथित्वाऽग्निं पूर्वाग्निं यदि पश्यति ।
मथिताग्निं समारोप्य पूर्वाग्नौ वर्त्तयेत् क्रियाः ॥२४॥

नाशेति । नाशोऽनुगमस्तद्भ्रान्त्याऽनुगत इति बुद्ध्याऽग्निं मथित्वा तद्द्वारेणोपलब्धिगोचरं कृत्वा पूर्वाग्निं खरस्थिताग्निं यदि पश्यति । तदेव मथिताग्निमरण्योस्ताग्निं समारोप्य पात्रान्तरे खरे वा कृत्वा समारोपविधिनाऽरण्योः समारोप्यं * कृत्वा क्रिया होमादिरूपा पूर्वाग्नौ खरस्थाग्नौ वर्त्तयेत् कुर्यादित्यर्थः । कालप्राप्तक्रियानुवादोऽयम् । अनुगतभ्रान्त्या मथितस्याग्नेस्त्यागः सर्वप्रायश्चित्तं चेत्युक्तं देवयन्ये । समारोपस्य तु नानात्वान्मूले नोक्तः । अस्यैव भ्रान्त्योद्धृतस्य पूर्वाग्नेरुपरि निधाने कृते अग्नयेऽग्निमतेऽष्टाकपालः पुरोडाशो भवति पूर्णाहुतिं वा जुहुयात् । कात्यायनेन तु उपस्थानमपि आम्नातम् । एवमाहवनीयदक्षिणाग्न्यन्यतराग्न्यनुगमभ्रान्त्या गार्हपत्यादुद्धरणे कृते

* समारोपम्, — इति क०, ख० पुस्तकयोः पाठः ।

पश्चात् पूर्वस्थाने प्रायश्चित्तं कृत्वा अन्योद्धृतस्य गार्हपत्यमध्ये पश्चात्प्रक्षेपः कार्यः। अथ सङ्कल्पदोषदुष्टोऽयमग्निरित्येवं बुद्धिश्चेत् तदा इदं प्रायश्चित्तं कुर्यात्। तं* अन्योद्धृतमाहवनीयस्य पश्चात् पुरस्ताद्वा स्थापयित्वा उभयत्राग्निद्वये होमं कुर्यात्। तत्रैवं कर्त्तव्यता। स्थातवतीं प्रणालसदृशीं पूर्वां समिधमाधाय एकमेव चतुर्गृहीतं तस्यां समिधि होतव्यं, यथा हुतं द्रव्यमुभयोरग्न्योः प्राप्नोति। एवमुभयत्र होमः कृतो भवति। एवमेव अन्योद्धृतस्याहवनीयदक्षिणाग्न्योरुपरि निधाने कृते पूर्वोक्तमिष्टिरूपमुपस्थानरूपं वा प्रायश्चित्तं बोध्यमिति सङ्क्षेपः ॥२४॥

प्रागस्तोदयादग्न्यनुगमे लौकिकाग्न्यादीनामनिक्षेपे च सति पुनराधेयस्य विकल्पमाह।

**उद्धातोदयनिम्रोकात्† यावदग्निविनाशनम्।**
**अग्न्याधिपुनराधेये‡ स्यातां तत्र विकल्पतः ॥ २५ ॥**

उद्धातेति। उद्धतोऽनुगमः, उदयश्च निम्रोकश्चेति समाहारद्वन्द्वः। उद्धातादुद्धातमारभ्य उदयनिम्रोकाद्यावदुदयास्तपर्यन्तमित्यर्थः। अग्निविनाशनम्, लौकिकाग्न्यादिक्षेपराहित्येन पूर्वमुक्तम्।

* तं, — इति नास्ति क० ख० घ० पुस्तकेषु।
† निम्लोकात्, — इति ग० पुस्तके पाठः। एवं परत्र।
‡ अग्न्याधिपुनराधाने, — इति ग० पुस्तके पाठः।



तत्र तस्मिन्निमित्ते सति। अग्न्याधिपुनराधेये। पुनराधानपुनराधेये विकल्पतो विकल्पेन स्यातां भवतः। तदुक्तं यज्ञपार्श्वे,—

"उदयास्तमयात्पूर्वं गार्हपत्यो गतो यदि।
भस्मनाऽरणिमास्पृश्य तूर्णं कुर्यात्तु मन्थनम् ॥
मथ्यमानो न जायेत लौकिकाग्न्यादिकं क्षिपेत्।
ततो विहरणं कृत्वा होमं कुर्याद्यथाविधि ॥
यद्यग्न्यादावनिक्षिप्ते उदयास्तमयो भवेत्।
स्वरस्थानं यदा शून्यं तदा स्यात् पुनराहितिः" ॥ इति।

पुनराहितिपदस्योभयवाचकत्वादिति ॥२५॥

निमित्तान्तरमाह।

**मन्त्रं विना समारूढोऽरण्योरात्मनि वा यदि।**
**तत्र ज्वलनशान्तौ* स्यादसमारूढशान्तिवत् ॥ २६ ॥**

मन्त्रेति। अरण्योः, वेत्यथवा, मन्त्रं समारोपमन्त्रं विना आत्मा मन्त्रान्तरेण† समारूढः कृत इति शेषः। ततो ज्वलनशान्तौ स्वरस्याग्न्युपशमे तत्र तस्मिन्निमित्ते सति असमारूढशान्तिवत् असमारोपितस्य शान्तिस्तया तुल्यं स्यात्। अनुगमप्रायश्चित्तं मथनपूर्वकं भवतीति भावः। ‡समारोपित इति बुद्ध्या मथनानुगमप्रायश्चित्ते चेन्न करोति तदा तृतीयहोमकालात्प्राक् ज्ञाते मन्थनादि कार्यम्। तदूर्ध्वज्ञाने तु पुनराधानमिति‡ ॥२६॥

* शान्तिः, — इति ग० पुस्तके पाठः।
† मन्त्रान्तरेण वा, — इति ङ० पुस्तके पाठः।
‡ ‡ अयमंशः ख० घ० पुस्तकयोस्त्रुटितः।

एवमवरोहणमन्त्रं विनाऽप्येतदेव नैमित्तिकं भवतीत्याह ।

**आरूढोऽपि यथाशास्त्रमवरूढो न शास्त्रतः ।**
**तृतीये होमकाले वा सम्प्राप्ते पुनराहितिः ॥ २७ ॥**

आरूढेति । यथाशास्त्रं, शास्त्रमनतिक्रम्येति यथाशास्त्रं मन्त्रः* । तेन आरूढः समारोपितोऽपि, यदीति पूर्वोक्तमाकृष्यम् । शास्त्रतोमन्त्रेण नावरूढः, प्रत्यवरोहणमन्त्रं विना भ्रान्त्याऽन्यमन्त्रेण वाऽवरूढोऽपि नावरूढस्तदा तृतीयहोमकालात्प्रागवरोहणमन्त्रपूर्वकं मन्थनं कार्यम् । तृतीयात् परन्तु पुनराहितिः स्यात् । इदन्तु शाखान्तरविषयम् । कस्यांचिदवरोहणस्यानाम्नानात् ।

यद्वा हेतुपरतया व्याख्येयम् । तद्यथा । आरूढेति । यथाशास्त्रं शास्त्रोक्तविधिना शास्त्रोक्तक्रिययेति यावत् । आरूढोऽपि शास्त्रतः शास्त्रेण सार्वविभक्तिकस्तस् । नावरूढोऽरणिमात्मानं वा प्राप्तः । अनेनेदं कर्म कर्त्तव्यमिति नियमविध्यन्यथाभावात् । विद्यमानेऽग्नौ यथोक्तः समारोपो धारणं वा कार्य्यम् । उपशान्तौ तु भस्मस्पर्शादि प्रायश्चित्तहोमान्तं कार्यम् । अथ मन्थने क्रियमाणे चेदग्निर्न जायेत तत्र किं स्यादत आह । तृतीयेति । चरस्याम्यनुगमोत्तरं मथ्यमानेऽप्यजननीत्यध्याहार्यम् । अथमारूढश्चाग्निवदित्युक्तत्वात् तृतीये होमकाले सम्प्राप्ते पुनराहितिः पुनराधानं भवतीति । वा शब्दोऽवधारणे । तदुक्तम् ।

---

* शास्त्रमात्रः, — इति ड० पुस्तके पाठः ।



"यस्याग्नावनुगते यस्य होमकालद्वयं व्रजेत् ।
उभयोर्विप्रवासे वा पुनराधानमर्हति" ॥२७॥

प्रागस्तोदयादग्न्यनुगमे लौकिकाग्न्यादिषु होमं सम्पाद्य मन्थनं कार्यमित्युक्तमधुना तदवधिकथनपूर्वकं पुनराधाननिमित्तमाह ।

**यदा तु लौकिकाग्न्यादि निधाय हवनं तदा ।**
**हुतेऽपि लौकिकाग्न्यादौ मथ्यमानोऽप्यनन्तरम् ॥ २८ ॥**
**द्वितीयाद्वा तृतीयाद्वा होमकालात्पुरा यदि ।**
**अग्निर्न जायते तत्र पुनराधानमाचरेत् ॥ २९ ॥**

यदेति द्वाभ्याम् । यदा यस्मिन् काले लौकिकाग्न्यादि निधाय तदा तस्मिन् काले तस्मिन्नेवाग्नौ हवनं कार्यमिति शेषः । न तूत्तरभाविमथिताग्नौ ।

तु पुनरर्थे । लौकिकाग्न्यादौ हुतेऽपि अनन्तरं होमानन्तरं मथ्यमानोऽपि अग्निः द्वितीयाद्वा तृतीयाद्वा होमकालात् पुरा यदि न जायते तत्र पुनराधानमाचरेत् । होमस्तु लौकिकाग्नौ एक एव । द्वितीयहोमकालात्प्राक् अजनने पुनराधानमिति रामाण्डारः । शाङ्खायनसूत्रे अप्रवत्स्यत्सात्मन्यरण्योः समिधि वाग्निं समारोहयत इति । होमस्तु समारोपमथ्यमानविषयो नानुगतमथ्यमानविषयइत्युक्तं वृत्तौ ॥२८॥२९॥

लौकिकाग्निनिधानात्प्रागुत्तरं वा भस्मस्पर्शादिविघ्निष्टाग्न्युत्पत्तिरेव पुनराधाननिवर्त्तिकेत्याह ।

**जातोऽपि वा विना भस्मस्पर्शं जातजपं विना।**
**प्रायश्चित्तं विना काष्ठं मन्थने चोदितं विना ॥ ३० ॥**
**लौकिकः स्यादतो लुप्तादारभ्यावर्त्तयेत् पुनः ।**

जातेति । भस्मस्पर्शं विना यस्मिन् गोमयपिण्डे दारुणि वाऽभ्युपशमस्तब्धस्मनाऽरण्योः स्पर्शमन्तरेण मन्थनात् प्रथम-द्वितीय-तृतीयहोमकालात्प्राक् जातोऽपि लौकिकः स्यादित्युत्तरस्थेन लौकिकपदेनान्वयः प्रत्येकं बोध्यः। यत्राभ्युपशमस्तब्धस्मनाऽरणी संस्पृशेदिति वचनात् ।

एवं, जातजपं विना जातोऽपि लौकिकः स्यात् । इदञ्च जातजपाभावरूपं पुनराधाननिमित्तं यस्यां शाखायां जातेऽग्नौ जातजपो विहितोऽस्ति तच्छाखापरम् । एवं जातोऽपि प्रायश्चित्तं विना लौकिकः स्यात् । अत्र प्रायश्चित्तशब्देनानुगतप्रायश्चित्तमेवोच्यते। तथाच प्रमादादिना प्रायश्चित्ताकरणेन लौकिको भवति।

अत्र केचित्। भस्मस्पर्शरूपस्यैवादिष्टप्रायश्चित्तस्य कृतत्वादन्यदनुगतप्रायश्चित्तं न भवति तेनानुगतप्रायश्चित्ताभावेऽपि लौकिकत्वं नेत्याहुः। परे तु भस्मस्पर्शस्याग्निहोत्रप्रकरणपठितत्वेन तत्परत्वात्तत्रैव भस्मस्पर्शो नान्यत्र। तद्व्यतिरिक्ताग्न्यनुगमे भस्मस्पर्शो न भवति किन्त्वनुगतप्रायश्चित्तमेवेति कर्काः। तदुक्तं रेणुकाचार्य्यैः ।

“विहारकालादन्यत्र यदा मर्थ्योऽनुगच्छति ।
मथित्वा मर्थ्यमुद्धृत्यानादिष्टं तत्र हूयते”॥ इति ।

मन्थने चोदितं काष्ठं विना प्रमादादिना प्रमन्थान्तरेण भाण्डा



वा लौकिकारणीभ्यां जातोऽपि लौकिकः स्यात् । एवमचोदितपाकादिकमपि पुनराधानप्रयोजकम् ।

“अचोदितेन पाकेन कृतेनोद्धरणेन च ।
लौकिकोऽग्निः स विज्ञेयः पुनराधानमर्हति” ॥

इति बौधायनीयात् । अतो यस्मादग्निविनाशो जात इति हेतोर्लुप्तात् लुप्तपदार्थाद्भस्मस्पर्शादिरूपादारभ्य यस्य पदार्थस्य भस्मस्पर्शादिर्लोपो जातस्तमारभ्य पुनरावर्त्तयेत् । यदि स्पर्शो विहितो-जातजपस्त्वकृतस्तदा जातजपमारभ्यावृत्तिः, स्पर्शस्य कृतत्वात् । एवमूह्यम् ॥३०॥

अकृतस्पर्शादिपदार्थानां कालावधिमाह ।

**यदि नावर्तयेदग्नौ तादृश्येव जुहोति च ॥ ३१ ॥**
**हूयमानेऽपि लुप्येत होमकालाष्टकात्परम् ।**

यदीति । प्रमादादालस्याद्वा यदि नावर्तयेत् पुनरावृत्तिं न कुर्यात्तादृश्येव स्पर्शादिरहिते एव चेत् जुहोति, तदा अष्टमहोमकालमभिव्याप्य लौकिको न भवति । इत ऊर्ध्वं होमकालाष्टकात्परं हूयमानेऽपि सति लुप्यते*। अग्निनिष्ठः संस्कार इति शेषः। लौकिको भवतीति भावः ।

इदमत्राकूतम् । अष्टमहोमपर्यन्तं तथाविधेऽप्यग्नौ कृतानां कर्मणां फलजनकत्वमव्याहतं तदुत्तरं तु नैष्फल्यमिति होमाधिकरणस्य लौकिकत्वात् । तेन लुप्तपदार्थस्य विस्मृत्या स्मरणोत्तरं चतुर्षु दिवसेषु मध्ये करणं इत ऊर्ध्वं पुनराधानमेव ॥३१॥

---

* कुप्यते, — इति ख० ग० पुस्तकयोः पाठः ।

भस्मस्पर्शस्य पुनराधाननिमित्तानित्यतां मतान्तरकथनेनाह ।

**भस्मस्पर्शं विनाऽप्येके लौकिकत्वं न मन्वते ॥ ३२ ॥**
**होमाष्टकाऽधिके लुप्ते धृतोऽप्यग्निर्विनश्यति ।**
**ततोऽल्पहोमलोपेऽपि यद्युद्वायेद्विनश्यति ॥ ३३ ॥**
**आधानपुनराधाने विकल्पेनात्र चोदिते ।**

भस्मेति । एके आचार्या भस्मस्पर्शं विनाऽपि लौकिकत्वं न मन्वते । अर्थादग्नेः । क्रियालोपनिमित्ते पुनराधेयं भवतीत्याह । होमेति सार्द्धेन । धृतोऽपि ज्वलमानोऽप्यग्निर्होमानामष्टकं तस्मादधिके होमे लुप्ते सति विनश्यति नष्टसंस्कारो भवति । ततो होमाष्टकादल्पहोमलोपेऽपि यदि उद्वायेदनुगमनं प्राप्नुयात् तर्हि विनश्यति । द्वित्रिचतुर्होमलोपेऽपि नष्टो भवति । विद्यमाने तु होमाष्टकपर्यन्तं नाशो न, तदुत्तरं नाशोऽग्नेरिति भावः ।

अत्रास्मिन् निमित्ते आधानपुनराधाने । आधानशब्देन पुनराधेयमुच्यते तथाप्यग्न्युत्पादकत्वेनाधानपदस्य भाक्तव्यवहारात् । विकल्पेन चोदिते । आधेयं पुनराधानं वा भवतीति भावः ॥ ३२॥३३॥

अथ लौगाक्षिमतमाह ।

**लुप्ते होमद्वये प्राह लौगाक्षिरनिलाहितिम् ॥ ३४ ॥**
**ज्वलत्स्वग्निषु कर्तव्या तन्तुमत्येव केवला ।**

लौगाक्षिनामा ऋषिर्होमद्वये लुप्ते सति पुनराहितिं पुन-



राधानं प्राह । तथा चैतन्मतेनाग्निष्वसत्सु होमद्वयलोपे पुनराधानमेव भवति । तथा चोक्तं भृगुणा ।

"होमद्वयात्यये दर्शपूर्णमासात्यये तथा ।
पुनरेवाग्निमादध्यादिति भार्गवशासनमिति" ॥

विद्यमानेष्वग्निषु तु पुनराधानं नेत्याह । ज्वलत्स्विति । अग्निषु ज्वलत्सु विद्यमानेषु केवला एकहविष्का तन्तुमत्येव तन्तुमतीष्टिरेव कर्तव्या । होमाष्टकलोपे ततोऽधिकलोपेऽपि पुनराधानं नेति* पूर्वस्माद्भेदः । यद्वा केवलां तन्तुमतीष्टिं कृत्वाऽऽपन्निवृत्तौ अतिक्रान्त होमान् कृत्वैव होमाः कार्या इति केवलशब्दार्थः ॥ ३४ ॥

इदमापद्विषयकमित्याह ।

**आपद्यग्निषु दीप्यत्सु मासार्द्धं चेन्न हूयते ॥ ३५ ॥**
**सर्वहोमानतिक्रान्तान् पक्षान्ते पक्षहोमवत् ।**
**समस्य जुहुयात्पश्चादिष्टिस्तन्तुमती भवेत् ॥ ३६ ॥**
**न तत्र पुनराधेयमिति कौषीतकी श्रुतिः ।**

आपदीति । आपदि राष्ट्रभङ्गादिविपत्तौ अग्निषु दीप्यत्सु विद्यमानेषु सत्सु मासार्द्धं पक्षपर्यन्तं न हूयते होमो न क्रियते चेत्, अतिक्रान्तान् सर्वहोमान् दिनसङ्ख्यात† सायं प्रातर्होमान् पक्षहोमवत् समस्य समासं कृत्वा जुहुयात् । पश्चादनन्तरं तन्तुमतीसंज्ञका इष्टिः प्रायश्चित्तं भवेत् । तत्र पुनराधानं पुनराधेयं

---

* विकल्पेन नेति, — इति ख॰ पुस्तके पाठः ।

† दिनसंख्यातः, — इति क॰ पुस्तके पाठः ।

वा विकल्पेनोक्तं न भवेदिति कौषीतकी श्रुतिर्ब्राह्मणम्। पञ्च-
होमवदित्युपलक्षणम् । तेन पञ्चन्यूनहोमलोपेऽपि तावद्दिनसङ्ख्यात-
होमान् कृत्वा तन्तुमतीष्टिः ।

अथातिक्रान्तहोमकरणमिति लौगाक्षिमताद्भेदः। स्वकाला-
दुत्तरो गौण इत्युक्तेर्गौणोऽप्यनेहसो भवेदित्युक्तेश्च होमकरणं युक्तम् ॥
३५॥३६॥

आपदि पञ्चादूर्ध्वमपि होमलोपे नाग्निनाश इति मतान्तरेणाह
षड्भिः ।

**वत्सरं वत्सरार्द्धं वा होमलोपे मतान्तरात् ॥ ३७ ॥**
**आपत्काले न नश्यन्ति दीप्यन्ते चेद्धुताशनाः ।**

वत्सरं वत्सरपर्यन्तमित्यर्थः । कालाध्वनोरत्यन्तसंयोगे इति
द्वितीया। वेत्यथवा। वत्सरार्द्धं वर्षस्यार्द्धं षण्मासपर्यन्तम् । आपत्काले
दुर्भिक्षादिना महापदि होमलोपे सति हुताशनाश्चेद्दीप्यन्ते अनु-
गताः कदाचिदपि न भविष्यन्ति, तर्हि न नश्यन्ति पुनराधानं
नेत्यर्थः । बहुवचनमन्तरागर्भिणीन्यायेन बोध्यम् । नित्यधारित्व-
पक्षाभिप्रायेण वा । यद्यनुगमनं समारोपो वा तदा पुनराधान-
मिति पूर्वोक्तं ज्ञेयम् । समारूढाग्नेरप्येकाहाद्यग्निहोत्रानारम्भे तन्तु-
मतीं कृत्वा प्रतिहोमं मनस्वतीं च प्रायश्चित्तमित्युक्तं प्रायश्चित्त-
प्रदीपे ॥३७॥

वत्सरार्द्धान्तरमापन्नित्यग्नौ अतिक्रान्तहोमान् कृत्वा पञ्चहवि-
ष्केष्टिः कार्येत्याह ।



**पञ्च कार्याः पुरोडाशा होमे लुप्तेऽर्द्धवत्सरम् ।**
**पथिकृत् प्रथमो ज्ञेयः पावकः शुचिरेव च ॥ ३८ ॥**
**व्रतपतिस्तन्तुमांश्चाग्नेर्देवतायाः गुणाः क्रमात् ।**
**सप्त कुर्यात् पुरोडाशान् होमे लुप्ते तु वत्सरम् ॥ ३९ ॥**
**पवमानः पावकश्च शुचिः पथिकृदित्यपि ।**
**वैश्वानरो व्रतपतिस्तन्तुमानिति सप्तभिः ॥ ४० ॥**
**विशेषितोऽग्निरेव स्याद्देवताऽच यथाक्रमम् ।**

पञ्चेति। अर्द्धवत्सरं, वत्सरस्यार्द्धमित्यर्द्धवत्सरं, होमे लुप्ते सति।
एकवचनं सामान्याभिप्रायेण । पञ्च पुरोडाशाः कार्याः । तानाह।
प्रथमः पथिकृत् ज्ञेयः, द्वितीयः पावकः, तृतीयः शुचिरेव चेत्यपरः,
चतुर्थो व्रतपतिः, पञ्चमस्तन्तुमान् । एते पथिकृदादयोऽग्नेर्देवतायाः
क्रमात् गुणा विशेषणानि भवन्ति । तथाचाग्निः पथिकृदेको,ऽग्निः
पावको,ऽग्निः शुचि, रग्निर्व्रतपति, रग्निस्तन्तुमान् क्रमेण देवता
भवन्ति। द्रव्यदेवताग्रहणाद्यागो विधीयते । स चैकतन्त्रेण पृथक्
तन्त्रेण वा भवति । वत्सरं होमे लुप्ते सति तु सप्तसङ्ख्याकान्
पुरोडाशान् कुर्यात् । सप्तहविष्कैकेष्टिः । पवमानेष्ट्यादिसप्त वा
प्रायश्चित्तेष्टीः कुर्यात् । अत्र यथाक्रमं क्रममनतिक्रम्य सप्तभिर्विशे-
षितो विशिष्टोऽग्निरेव देवता स्यात् । तत्र पवमान एकोगुणः,
पावको द्वितीय इत्यादयः सप्त गुणाः, तद्विशिष्टः। अग्निः पवमान-
एकः अग्निः पावको द्वितीयोऽग्निः शुचिस्तृतीयोऽग्निः पथिकृच्चतु-
र्थोऽग्निर्वैश्वानरः पञ्चमोऽग्निर्व्रतपतिः षष्ठोऽग्निस्तन्तुमान् सप्तम इति

देवता भवन्ति । अत एवाद्यूर्ध्वमपि होमलोपे नाधानमिति कौषीतकमताद्भेदः ॥३८॥३९॥४०॥

घोरापद्विषयमाह ।

**एकारम्भपरार्द्धान्तविच्छेदेष्वविशेषतः ॥ ४१ ॥**
**मनस्वतीं व्रतयुतां नाधानमनले सति ।**

एकेति । अर्थाद्धोमानामेकारम्भपरार्द्धान्तविच्छेदेषु एकहोमलोपमारभ्य परार्द्धसङ्ख्यान्तहोमलोपेषु । अत्र परार्द्धपदमनेकवाचकत्वे भाक्तम् । यावज्जीवनिमित्तस्य तत्कालमध्यपातित्वाच्छक्यार्थानुपपत्तेः(१) । दृष्टश्चैतत् सहस्रसंवत्सरं सत्रमुपासीरन्नित्यत्र । अनले सति, खरे विद्यमाने अरण्योर्वा समारोपिते, आधानं पुनराधानं नेति । अत्र यत्र यत्राधानपदं तत् मुख्यार्थान्वयानुपपत्तेः पुनराधानं लक्षयति । किन्तु अविशेषतः व्रतयुतां व्रतपतेष्टिसहितां मनस्वतीं तत्सञ्ज्ञिकामाहुतिं जुहुयादिति शेषः । तेन एकहोमलोपे यावज्जीवहोमलोपे च नाधानं व्रतपत्येष्टिमनस्वतीहोमरूपं प्रायश्चित्तं घोरापन्निमित्तकौ कार्यमित्युक्तं भवति ॥४१॥

**इयमापत्सु घोरासु मिलितासूपयोक्ष्यते ॥ ४२ ॥**
**द्वादशाहुतिविच्छेदे * कुर्वन्त्यन्ये मनस्वतीम् ।**

* द्वादशाद्याहुतिच्छेदे, — इति ग० पुस्तके पाठः ।

(१) यावज्जीवं खल्वग्निहोत्रादिकं कर्त्तव्यतया चोद्यते । जीवनकालश्च शतायुर्वै पुरुष इत्युक्तलक्षणः । एवञ्च परार्द्धसंख्यकहोम एव जीवनकाले न सम्भवति कुतस्तल्लोप सम्भवः । एवञ्चानायत्या परार्द्धपदमनेकबोधकमिति भावः ।



*** मनोज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु । या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि मनसा घृतेन स्वाहा । इति ।**

इयमिति । इयं व्रतयुता मनस्वती घोरासु दुर्घटासु आपत्सु मिलितासु एककालं प्राप्तासु उपयोक्तव्या, नान्यथा । यथोपप्लवेऽटव्यां होमद्रव्याद्यभावे शरीरापाटवे च प्रसक्तौ । मतान्तरमाह । अन्ये आचार्या द्वादशाहुतिविच्छेदे मनस्वतीं कुर्वन्ति । तदूर्ध्वमाधानमेव भवति । इदं स्वल्पापद्विषयमिति मिश्राः । मनस्वतीमन्त्रपाठमाह । मनोज्योतिरिति ॥४२॥

निमित्तान्तरमाह ।

**नाशदाहावरण्योश्चेदग्निं यत्नेन पालयेत् ॥ ४३ ॥**
**अन्यारण्योर्यावदेव नारोप्य मथितः पुनः ।**
**उद्वाने पुनराधानं छन्दोगपरिशिष्टतः ॥ ४४ ॥**

नाशेति । अरण्योश्चेन्नाशदाहौ स्तः । नाश उपघातः । दाहः प्रसिद्धः । तदा तावत्कालपर्यन्तं अग्निं यत्नेन पालयेत् । यावदेव अन्यारण्योरारोप्य पुनर्न मथितः । तत्पूर्वमुद्वाते † अनुगते सति पुनराधानं छन्दोगपरिशिष्टतः भवतीति शेषः ॥४३॥

अधिकरणप्रसङ्गादाह ।

* अत्र मनस्वतीपाठाध्याहारः । तद्यथा । इत्यधिकं ग० पुस्तके । क० पुस्तके मनोज्योतिः, — इत्येतावन्मात्रं वर्त्तते । पुस्तकान्तरेषु नास्त्ययं अंशः ।

† इत्थमेव पाठः सर्व्वत्र ।

आत्मारोपे शरीरस्य नाशे नश्यति पावकः ।
शवदेहे विनष्टेऽपि दक्षिणः पाणिरस्ति चेत् ॥ ४५ ॥
लोकाग्नौ स्थापयित्वाऽस्य पाणिं पुत्रोऽजपेद्यजुः ।
उपावरोह जातेति तूष्णीमग्निं नयेत्ततः ॥ ४६ ॥
द्वादशोपात्तेनाज्येन तूष्णीकं जुहुयात् स्रुचा ।
हस्तस्यातः प्रपद्येत प्रेतेऽमात्या इतिक्रियाः ॥ ४७ ॥
सकले कुणपे लब्धेऽप्येष एव विधिर्भवेत् ।
अग्नावरण्योरारूढे प्रमीयेत पतिर्यदि ॥ ४८ ॥
प्रेतं स्पृष्ट्वा मथित्वाऽग्निं जप्त्वा चोपावरोहणम् ।
हुतञ्च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रियाम् ॥ ४९ ॥

उपावरोह जातवेद इमं प्रेतं स्वर्गाय लोकाय नय प्रजानन् । आयुः प्रजां रयिमस्मासु धेहि प्रेताहुतीश्चास्य जुषस्व स्वाहा । इत्युपावरोहणमन्त्रपाठः ।

आत्मेति । आत्मारोपे शरीरस्य नाशे सति पावकः नश्यति । नारणीनाशे । अत्र शरीरनाशशब्देन शवालाभ उच्यते । स च व्याघ्रादिभक्षणेन जलप्रवाहादिना वा भवति । तत्र व्याघ्रादिना, शवदेहे शवरूपं देहं* तस्मिन् विनष्टेऽपि चेत् दक्षिणः पाणिरस्ति, तदा न नाशः । तत्र किं स्यादत आह । लोकेति । अस्य शवस्य पाणिं लोकाग्नौ स्थापयित्वा पुत्रः पुत्रादिरुपावरोहजातेति यजुर्जपेत् । ततस्तूष्णीमग्निं नयेत् । यस्यां शाखायां श्मशानं प्रति नयने

* इत्यमेव पाठः सर्व्वत्र ।



मन्त्राम्नानं तन्मा भूदित्यभिप्रायपरं तूष्णीं पदम् । ततः पितृभूमौ तस्मिन्नेवाग्नौ द्वादशोपात्तेन द्वादशवारं गृहीतेनाज्येन स्रुचा तूष्णीकं जुहुयात् । प्राकृतमन्त्रनिषेधार्थं तूष्णीकं पदम् । अतः परं अमात्या षट्पुरुषाः पुत्रादयः प्रेते इतिक्रियाः पात्रविन्यासादयः, ताः सर्वाः हस्तस्य कुर्युः । यदि सकले कुणपे शवे लब्धे* तत्रापि एषएव विधिर्भवेत् नाग्निनाशः । हस्तस्य शवस्य चालाभे † अरण्यां प्रेताधानपूर्वकोदाहः । तेषामप्यलाभे तत्पूर्वकः पर्णशरदाहः । आत्मसमारोपणविषयमेतत् । प्रसङ्गादरणिसमारोपविषयमाह । अग्नाविति । अरण्योरग्नावारूढे यदि पतिर्म्रियेत, प्रेतं स्पृष्ट्वा उपावरोहणं यजुर्जप्त्वाऽग्निं मथित्वा तस्मिन्नग्नौ द्वादशोपात्तं हुतं तूष्णीं हुत्वा शवक्रियाः कुर्युरिति शेषः । उक्तमन्त्रस्पष्टार्थं मन्त्रपाठमाह । उपावरोहेति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

विच्छिन्नाग्न्यादिविषयमाह ।

विच्छिन्नवह्निमुत्सृष्टपावकं विधुरानलम् ।
आहिताग्निं मृतं दग्धुं चेताग्न्युत्पत्तिसिद्धये ॥ ५० ॥
भरद्वाजादयः प्राहुः प्रेताधानविधिं पृथक् ।

विच्छिन्नवह्निं विच्छिन्नाग्निं उत्सृष्टपावकं उत्सृष्टाग्निं विधुरानलं विधुराग्निम् । एतादृशं मृतमाहिताग्निं दग्धुं चेताग्न्युत्प-

* इत्यमेव पाठः सर्व्वत्र । यदि सकलः कुणपः शवो लब्धः,— इति तु भवितुमुचितम् ।

† प्रेता,— इति ख० पुस्तके पाठः । एवं परत्र ।

सिद्धये प्रेताधानविधिं पृथक् स्वतन्त्रं प्रेताधानमेव भारद्वाजादयः प्राहुः ॥५०॥

तमेवाह ।

**प्राचीनावीतिवानुद्धृत्याग्नीनुक्ष्यायतनान्यथ ॥ ५१ ॥**
**प्रेतं स्थाप्यालये क्षिप्त्वा पश्चिमाग्न्यालयेऽरणी ।**
**सन्निधायानलं मन्थेद्यस्येति यजुषा ततः ॥ ५२ ॥**

**यस्याग्नयो जुहुतोमाऽसकामाः सङ्कल्पयन्ते यजमानमाऽसम् । जानन्तु ते हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु । इति मन्त्रः ।**

अर्थात् पुत्रादिः प्रेताधानविधिं करिष्ये इति सङ्कल्प्य प्राचीनावीतिवान् भूत्वा अथ आयतनानि उद्धृत्यावोक्ष्य यजमानस्थाने प्रेतं स्थाप्य, पश्चिमाग्न्यालये गार्हपत्यागारे अरणी सन्निधाय यस्येति यजुषाऽनलं मन्थेत् मन्थनमन्त्रस्यैकविधत्वात्* पाठमाह । यस्येति । ॥५१॥५२॥

**प्रणीय पावकं तूष्णीं द्वादशोपात्तसर्पिषा ।**
**तूष्णीं हुत्वा ततः कुर्युः प्रेतेऽमात्या इतिक्रियाम् ॥५३॥**

ततः पावकं प्रणीय आहवनीयस्थाने निधाय तूष्णीं द्वादशवारं गृहीतेनाज्येन तूष्णीमेवाहवनीये हुत्वा ततोऽमात्याः पुत्रादयः प्रेते इतिक्रियां कुर्युः ॥५३॥

---

* इत्थमेव पाठः सर्वत्र । मम तु, मन्थनमन्त्रस्यानेकविधत्वात्, — इति पाठः प्रतिभाति ।



अथारण्योरप्यभावे विधिमाह ।

**नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् ।**
**आहरेदरणिद्वन्द्वमाधानोक्तविधानतः ॥ ५४ ॥**
**तद्द्वेवाभिमन्त्र्याथ तन्मन्त्राभ्यां विनिष्टपेत्* ।**
**निर्मथ्ये पावके यद्वौपासनार्थे† तदस्ति चेत् ॥ ५५ ॥**
**ततोऽग्निशून्यप्रेतोक्तमन्थनादि प्रपद्यते ।**
**यत्तु यस्याग्नयोजुहुत्यादिमन्त्रकमीरितम् ॥ ५६ ॥**

नष्टेष्विति । अग्निषु नष्टेषु अरण्योर्नाशे च सति यदि स्वामी म्रियेत, तदा पुत्रादिराधानोक्तविधानेन यथोक्तलक्षणमरणिद्वन्द्वमाहरेत् । तद्द्वेव वक्ष्यमाणनूतनारणिस्वीकारविधिवद्देव । तन्मन्त्राभ्यां वक्ष्यमाणनूतनारणिस्वीकारविध्युक्ताभ्यां निर्मथ्ये लौकिकारणिमन्थनोत्पन्ने पावके लौकिकेऽग्नौ विनिष्टपेत् प्रतपेत् । तदरणीद्वयं औपासनार्थं औपासने इत्यर्थः । प्रतपेत् । चेत्तदस्ति । सर्वाधानिनस्तु निर्मथ्याग्नौ । ततस्तयोररण्योरग्निशून्यप्रेतोक्तमन्थनादि, अग्निशून्यानि यानि आहिताग्निप्रेतानि विच्छिन्नोत्सृष्टविधुराहिताग्निप्रेतानीत्यर्थः । तेषु उक्तं मन्थनादि ईरितं पूर्वोक्तं यत्तत्सर्वं प्रपद्यते प्राप्नोति । मन्थनं विशिनष्टि । यस्येति । यस्याग्नयो जुहुत्यादिमन्त्रो यस्मिन् तथाभूतं, स्वार्थेकप् । प्रयत्नादिदं विधिद्वयं भरद्वाजप्रोक्तमेव मूलकृतोक्तम् ॥५४॥५५॥५६॥

---

* विनिक्षिपेत्, — इति ग० पुस्तके पाठः ।

† पासनार्द्धे, — इति क० ख० घ० ङ० पुस्तकेषु पाठः ।

अथानेकपुनराधाननिमित्तानुगतधर्मकान्तर्भूतोपेक्षारूपनिमित्तं वक्तुमारभते ।

**भार्यायां प्रोषितयाञ्चेदुदेत्यर्कोऽस्तमेति वा ।**
**तत्र स्यात्पुनराधेयमन्ये प्राहुरिहान्यथा ॥ ५७ ॥**

भार्यायामित्यादिना । सा चोपेक्षा च प्रवासादि इति पूर्वोक्तलक्षणा । आदिपदात् पत्नीसीमातिक्रमणादि । भार्यायां पत्न्यां प्रोषितायां, प्रकर्षेणोषिता प्रोषिता तस्यां, गृहसीमामतीत्यान्यत्र वाऽन्यत्राग्निशालातोगतायामर्कश्चेदुदेति वाऽस्तमेति चेत्, तत्र तस्मिन्निमित्ते पुनराधेयं भवति । अन्ये आचार्या इह एतादृक्स्थले अन्यथा प्राहुः । * अत्र सीमाशब्देन गृहसीमा युक्ता । तदुक्तं छन्दोगपरिशिष्टे ।

"विहारकाले यदि कार्यलोभात्-
पत्नी तु सीमानमतीत्य गच्छेत् ।
निःसंशयोऽग्निः खलु नाशमेति
गृहस्य सीमाऽत्र विवक्षितोऽर्थः" ॥ *

एकभार्यकविषयमिदमिति वदन्ति । तदुक्तं यज्ञपार्श्वादौ ।

"पत्न्याः प्रवासविषये पुनराधिरुदाहृता ।
वाक्यैर्मनीषिभिः प्रोक्तैरेकभार्यस्य सेव्यते" इति ।

तत्र प्रवासो नाम ।

यदि सीमामतिक्रम्य रात्रौ तत्रैव वत्स्यति ।

* * एतच्चिह्नान्तर्गतः पाठः ङ० पुस्तकातिरिक्तपुस्तकेषु नास्ति ।



गृहस्य प्रयाणं यत् प्रवास उच्यते बुधैः" ।

अत्र सीमाशब्देन गृहग्रामसीमोच्यते । तेनाग्निगृहं विहाय स्वग्रामेऽन्यग्रामे वा रात्रौ वासः प्रवासः । रात्रिपदमुदयास्तमयकालोपलक्षकम् । मूलैकवाक्यताऽनुरोधात् ।

"यत्तु नारायणेनोक्तम् ग्रामात्स्वाग्निसमन्वितात् ।
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतम् ॥
एकाकिनी यदा पत्नी कदाचिद् ग्राममाव्रजेत् ।
सोमकालेऽभिसम्प्राप्ता न सा दोषेण युज्यते ॥
अथ तत्रैव निवसेत् ग्रामं हत्वा प्रमादतः ।
लौकिकाग्निः स विज्ञेयः इत्येषा नैगमी श्रुतिः" । इति

वचनाद् ग्रामान्तरे रात्रौ वासः प्रवासः । तेन स्वग्रामे पत्न्याः रात्रौ वासे न दोषः । अत्रापि रात्रिपदमुदयास्तमयोपलक्षकम् । अन्यथा सायंहोमानन्तरं गमने उदयात् प्राक् परावृत्तौ पुनराधानप्रसङ्गः स्यात् । रात्रिवाससद्भावात् । अपिच रात्र्यहर्वासयोरविशेषात् । यद्देवमिश्रादिग्रन्थे ।

"ग्रामान्तरे नगर्यां वा पल्ल्यां वाऽन्यत्र वा क्वचित् ।
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतमिति" ॥

तत् पूर्वोक्तप्रवासलक्षणवाक्यैकवाक्यतया व्याख्येयम् । तादृग्वासवार्थस्योपलम्भेन लक्षणान्तरमिति । ननु

"प्रवसेद्भार्यसम्पत्ते न तीर्थाय कदाचन ।
इति कूर्मपुराणोक्तं तथा बौधायनेन च" इति ॥

बौधायनीयाद्भुताजनस्य प्रवासप्रयोजकत्वात्पत्न्यास्तु तदभावात्

कथं तत्प्रसक्तिः । त्रय एवाधनाः स्मृता इति स्मृतेश्चेति चेन्न । अस्ति भार्या अपि धनवत्ता । सम्भाव्यते च तद्गतात्मनसमृद्धिर्लोके । स्त्रीधनानि षडिति स्मृतेः । किञ्च भवति हि पितृमातृभ्रातृपुत्र- दर्शनेन धनोपलब्धिः ।

"दत्तं स्वसृदुहितृभ्याममनन्तफलदम्भवेत्" ।

इति दानखण्डे दर्शनात् । दीयते च दूरादागताभ्यः स्वसृप्रभृ- तिभ्यो वासःप्रभृति । यत्त्वधना इत्युक्तं, तदस्वातन्त्र्यपरतया व्याख्ये- यम् । अतएव न कुर्युरग्न्युपस्थानमिति वक्ष्यते । एवञ्चोपस्थिते यजमानवत्पत्न्या अपि प्रवासे यदि करोति तदाऽनेन भार्यायां प्रोषि- तायामिति वाक्येन स निषिध्यते । अतो बहुभार्यस्यैकभार्यस्य वा पत्न्याः प्रवासे पुनराधेयमेवेति मूलकाराः । इदमेकभार्यकविषयं न तु बहुभार्यकविषयमित्यन्ये । तत्र स्यात् पुनराधानमिति कुत्र- चित्पाठः । युक्त एवायम् ॥५६॥

अनेकपत्नीकस्यैकपत्नीकस्य वा नियतपत्नीप्रवासे स्वोक्तस्य पुन- राधेयस्य मतान्तरेण पत्नीनियममाह ।

**ज्येष्ठा चेदग्निसंयुक्ता गच्छन्त्यन्या यथारुचि ।**
**यजमानेन सहिता यद्वा ता एव केवलाः ॥ ५८॥**

ज्येष्ठेति । ज्येष्ठा पत्नी अग्निसंयुक्ता चेत्, संयुक्तशब्दः सामीप्यव- चनः । मुख्यार्थासम्भवात् । अन्याः कनिष्ठाः यथारुचि, क्रिया- विशेषणमिदम् । यथेच्छं, उदयास्तमयकालपर्यन्तमपि गच्छन्ति । दोषाभावज्ञापनार्थं यद्वा गच्छन्त्वन्या इति स्वोक्तोऽपि क्वचित्पाठः ।



बहुभार्यस्य ज्येष्ठा चेत् प्रवसेत् पुनराहितिरिति ।

वाक्यान्तरात् । कीदृश्योऽन्याः । यजमानेन भर्त्रा सहिताः । यद्वा, केवला यजमानरहितास्ता एव यवीयस्य एव यथाकामं गच्छन्तु । तेन ज्येष्ठासन्निधाने भर्तुः सन्निधाने सत्यप्यसति वा इतरासां प्रवासो निमित्तं न भवतीति भावः । अत्र ज्येष्ठाप्रवास एव पुनराधाननिमित्तमिति पूर्वस्माद्भेदः ॥५८॥

कदाचित् कनिष्ठासहकृतप्रवासयंष्टुः कतिचिन्नियमान् प्रसङ्गा- दाह ।

**प्रोषितः स्यादधः शायी ऋतुपायी त्वमैथुनम् ।**
**वदन् बौधायनस्त्वेवमेका चेदग्निसन्निधौ ॥ ५९ ॥**
**इतरासां यथाकामं प्रवासमनुमन्यते ।**
**इत्युक्तं भवभाष्येऽपि तातश्लोकेषपीरितम् ॥ ६० ॥**

प्रोषित इति । प्रोषितः पत्नीसहितकृतप्रवासः अधः शायी स्यात् । अधःशब्देनाग्निस्थानान्नीचत्वमुच्यते । खट्वाव्युदासार्थं, न स्थाना- न्तरनिषेधार्थम् । ऋतुपायी स्यात् । ऋतौ पीयतेऽसौ ऋतुपायी ऋतुजायोपयायी स्यात् । तु यस्मादमैथुनम् । मैथुननिषेधः प्रोक्त इति शेषः । यद्वा, ऋतुगमनं अमैथुनं प्रोक्तमिति । उक्तं चर्तुगम- नस्यामैथुनत्वं दानधर्मेषु भीष्मयुधिष्ठिरसंवादे । अधुना ज्येष्ठाया- अपि प्रवासे बौधायनमतेन दोषाभावमाह । वदन्निति । बौधा- यनस्तु, एका कनिष्ठा ज्येष्ठा वा अग्निसन्निधौ चेद्विद्यते, एवं वदन्

इतरासां अन्यासां यथाकामं यथारुचि प्रवासं अनुमन्यते । अतएव ज्येष्ठाप्रवासेऽपि न पुनराधानमिति देवयज्ये मञ्जूषवचनम् ।

"ज्येष्ठा चेद्बहुभार्य्यस्य अतिचारेण गच्छति ।
पुनराधानमप्येके इच्छन्ति न तु सूरयः" ॥

इति मञ्जूषते । ज्येष्ठाप्रवासेऽपि दोषाभावस्य प्रामाण्यं सूरिपदादिज्ञायते। न तु गौतमः,—इति मिश्रग्रन्थघटनवैकल्पिकपाठसमाश्रयणे ज्येष्ठाप्रवासे पुनराधानं स्यादेवेति विकल्पः। तथाच बहुभार्य्यस्यान्यतरपत्नीसन्निधाने पुनराधानमेवेति पूर्वस्माद्भेदः। एतदेव मञ्जूवादिसम्मत्या द्रढयति । इत्युक्तमिति। भवभाष्यसञ्ज्ञके ग्रन्थेऽपि इति अनेनैव प्रकारेण उक्तम्। तथा तातश्लोकेष्वपि कारिकास्वपि ईरितं उक्तमिति ॥५९॥६०॥

अधुनैकभार्य्यस्यानेकभार्य्यस्य वा स्वामिनोऽग्निसन्निधाने सर्वथैव पुनराधानं नेत्यपरमतेनाह ।

**एकस्यामप्यतिष्ठन्त्यामग्निहोत्रसमीपतः ।**
**पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे विदुः ॥ ६१ ॥**

एकस्यामिति । एकस्यामपि ज्येष्ठकनिष्ठान्यतरपत्न्यामपि अग्निहोत्रसमीपतः समीपे इत्यर्थः । अतिष्ठन्त्यामविद्यमानायां सत्यां, पतिः स्वामी चेत्तिष्ठति विद्यते। अग्निहोत्रसमीपत इत्यनुषज्यते। चेत्, नाशोऽग्निनिष्ठसंस्कारनाशो नेत्यपरे आचार्या विदुरिति । * तच्च

---

* एतच्चिह्नान्तर्गतः पाठो क० पुस्तके नास्ति ।



षड्दर्शनरामाण्डारभाष्यपर्य्यालोचनयाऽनेकभार्य्यस्यैकभार्य्यस्य वा प्रवासो भवति । तत्रैव पूर्वं पूर्वपक्षीकृत्य पत्न्यास्तुल्यस्वामित्वं बाधित्वाऽङ्गत्वमापाद्य तत्समर्थनाय पुंस्त्वविशिष्टचोदनाऽभिधानपूर्व्विका कल्पान्तरोक्तिः प्रदर्शिता। तदर्थमेव दाशरथिभीमादिमतसमानामाचारं दर्शयित्वा जैमिनिसूत्राद्योपसंहृतम् । तस्मात् सिद्धमभावेऽपि पत्न्या ■ कर्म्मणोनिवृत्तिरिति । एवमेव मीमांसकशिरोमणिनीलकण्ठादिभिरपि कर्म्मजन्यफलेच्छावत्पत्न्यास्तुल्याधिकारोऽन्यथापाचाज्यनीक्षियवपश्वादिवदङ्गत्वमुक्तम् * । सर्वासामसन्निधानेऽपि न पुनराधानमिति बौधायनमतात् पूर्वमतादपि च भेदः ॥ ६१॥

एवं स्वामिपत्न्योरन्यतरसन्निधाने मतभेदैर्दोषाभावमुक्त्वाऽधुनोभयासन्निधाने मतभेदेनाह † ।

**सन्ध्यावदन्यदाऽप्यग्नीन् हित्वा चेद्दम्पती गतौ ।**
**ग्रामान्तं वाऽथ सीमान्तं तत्रैकेऽग्निक्षमं विदुः ॥ ६२ ॥**
**अन्ये ग्रामान्तवसनात् ‡ न त्वतिक्रममात्रतः ।**
**सीम्नि त्वतिक्रमादेव केवलान्नाशमब्रुवन् ॥ ६३ ॥**
**यदोभावप्यतिक्रम्य सीमां प्रत्यागतौ पुनः ।**
**उदयास्तमयात्पूर्वं न नाशोऽस्तेति केचन ॥ ६४ ॥**

---

* अत्र, आङ्गमयूखे, — इत्यधिकः पाठः ख० घ० पुस्तकयोः ।

† मतभेदानाह, — इति ङ० पुस्तके पाठः ।

‡ ग्रामान्तरं गत्वा, — इति ग० पुस्तके पाठः ।

सन्ध्यावदित्यादिभिः । दम्पती पत्नीस्वामिनावुभौ अन्यदा यस्मिन् कस्मिन् कालेऽग्नीन् हित्वा चेद्गतौ गमनं कुरुतः ग्रामस्य स्वावसथग्रामस्यान्तं यावत्पर्यन्तं जनानां वसतिः तत्पर्यन्तमित्यर्थः । चेत्यथ वा । ग्रामसीमान्तं स्वावसथग्रामसीमापर्यन्तं, तत्र तस्मिन्निमित्ते सन्ध्यावत् अग्निनाशं नाशं विदुः । यथाऽस्तोदयकाले उभयोरसन्निधानेन नाशः प्रसिद्धोऽस्ति, तद्वदुभौ यदा कदाचित् जनवसतेरूर्ध्वं सीमोर्ध्वं वा गतौ चेत्, पुनराधानमिति सन्ध्यावदित्युक्तम् । अत्र सीमाशब्देनाग्निसंश्रितग्रामसीमेति नारायणवृत्तौ । अन्यगारसीमेत्याश्वार्कः । ग्रामसीमान्यगारसीमेति प्रतन्त्रधीभाष्ये * । अत्र कैमुतिकन्यायेन तत्सिद्धौ पुनर्ग्रहणं तस्यापि निमित्ततां प्रतिपादयितुम् । अन्ये आचार्या ग्रामान्ते वसनात् पुनराधानं न पुनरतिक्रममात्रेण सीम्नि तु केवलाद्वासरहितादतिक्रमादेव नाशमब्रुवन् । अत्र ग्रामान्तवाससीमातिक्रमणे निमित्ते इति पूर्वस्माद्भेदः । सीमातिक्रमणेऽपि दोषाभावमाचष्टे । यदेति । यस्मिन् काले उभावपि स्वामिनौ सीमामतिक्रम्यापि पुनः उदयास्तमयात् पूर्वं स्वग्रामं प्रत्यागतौ अत्रास्मिन्निमित्ते नाग्नोनेति केचनाहुरिति शेषः । अयमेव पूर्वमताद्विशेषः ॥६२॥ ६३॥६४॥

उदयास्तमयोत्तरमपि अपराष्टत्तौ स्वमतेन दोषाभावमाह ।

* प्रतन्त्रयाभाष्ये.—इति क० पुस्तके पाठः । प्रतभाष्ये —इति ख० पुस्तके पाठः । 'प्रत' शब्दात् परं रक्षितं किञ्चित् स्थानं घ० पुस्तके ।



**छन्दोगपरिशिष्टोक्तहोमकालात्यये ऽनलः * ।**
**सीमातिक्रमणान्नश्येन्नोदयास्तमयादपि † ॥ ६५ ॥**

छन्दोगेति । उभयोरित्यध्याहारः, सीमातिक्रमणोत्तरं, छन्दोगपरिशिष्टं कर्मप्रदीपस्तदुक्तोयोनवघटिकात्मकोहोमकालस्तदत्यये सति अनलो अग्निर्नश्येत्, उदयास्तमयहेतुना नेति । तदुक्तं देवयाज्ञिकैः सङ्ग्रहवचनैः ।

"विहायाग्निं सभार्यश्चेत् सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते इति ॥
यजमानस्य पत्नी च उभौ प्रवसितौ यदा ।
आ होमान्ननिवर्त्तेते पुनराधानमर्हति" ॥

यदोभावप्यतिक्रम्येति मूलवत् पूर्वार्द्धं पठित्वा ।

"होमकालमतिक्रम्य तदा नश्यन्ति वह्नयः"—इति च ॥
"पत्नी सीमामतिक्रान्ता यजमानोऽगृहे यदि ।
आ होमाद्यदि नागच्छेत् पुनराधानमर्हति ॥
एकाकिनी यदा पत्नी कदाचिद्ग्राममाव्रजेत् ।
होमकालेऽभिसम्प्राप्ता न सा दोषेण युज्यते ॥
अथ तत्रैव निवसेद्ग्राममङ्गत्वा प्रमादतः ।
लौकिकोऽग्निः स विज्ञेय इत्येषा नैगमी श्रुतिः"—इति ॥
तस्मात् नवनाडिकोत्तरं सीमातिक्रमणेनोभया

सन्निधाने पुनराधानमिति निर्गलितोऽर्थः ॥६५॥

* पुनः,—इति क० ख० घ० ङ० पुस्तकेषु पाठः ।
† सीमातिक्रान्तयोर्नश्येन्नोदयास्तमयादिति,—इति ग० पुस्तके पाठः ।

सीमातिक्रमप्रसङ्गान्नद्यतिक्रमणेऽप्याह ।

विनाऽग्निभिर्यदा पत्नी नदीमम्बुधिगामिनीम् ।
अतिक्रामेत्तदाऽग्नीनां विनाशः स्यादिति श्रुतिः ॥ ६६ ॥

विनेति । पत्नी आधानसहकृता अग्निभिर्विनाऽम्बुधिगामिनीं समुद्रगामिनीं स्वेनैव नाम्ना न तु गङ्गादिसहायेन, सर्वेषां जल-प्रवाहाणां तादृशत्वात् । नदीं, नदीलक्षणं त्वग्रे वक्ष्यते, अतिक्रा-मेदुत्तीर्य गच्छेत्, तदाऽग्नीनां विनाश इति श्रुतिः वेदश्रवणमित्यर्थः ॥ ६६ ॥

इदानीमसमुद्रगामिनीविषयमाह ।

पत्न्यन्तरेऽथवा पत्यौ हुताशनसमीपगे ।
अन्या पत्नी यथाकाममतिक्रामेन्नदीमपि ॥ ६७ ॥
न कुर्युरग्न्युपस्थानं प्रवसन्त्योऽपि योषितः ।
प्रोषिता न जपं कुर्युरश्नन्त्येव सधर्मकम् ॥ ६८ ॥
आगतोपस्थितिञ्चापि स्त्रीणां नेच्छन्ति सूरयः ।

पत्न्यन्तरेति । पत्न्यन्तरे ज्येष्ठाकनिष्ठयोन्यतरस्मिन्, अथवा पत्यौ हुताशनोऽग्निस्तस्य समीपगे सति पत्नी यथाकामं यथेच्छं नदीमपि अतिक्रामेन्न दोष इति यावत् । एतेन पतिपत्न्यन्तरसन्निधाने असमुद्रगाऽतिक्रमेण पुनराधानमितरस्यास्त्वतिक्रमेणोभयोयोरसन्नि-धाने पुनराधानं सन्निधाने नेति भावः । अत्र पत्नीग्रहणात् सीमा-

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1059.



चिकाण्डमण्डनम् ।

# TRIKĀṆḌA-MAṆḌANAM

BY

BHĀSKARA-MIÇRA, SOMA-YĀJI

BEING

AN EXPOSITION OF THE SOMA-YĀGA APHORISMS OF ĀPASTAMBA.

WITH AN

ANONYMOUS COMMENTARY ENTITLED VIVARAṆA

EDITED BY

MAHĀMAHOPĀDHYĀYA CANDRAKĀNTA TARKĀLAṄKĀRA.

FASCICULUS III.

CALCUTTA.

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1903.

| | | |
|---|---|---|
| Padumawati, Fasc. 1–4 @ 2/ ... ... ... | Rs 8 | 0 |
| Pariçiṣṭa Parvan, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Prākṛita-Paingalam, Fasc. 1–7 @ /6/ each ... ... ... | 2 | 10 |
| Prithivirāj Rāsa, (Text) Part II. Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... ... ... | 0 | 12 |
| Prākṛta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... | 1 | 8 |
| Parāçara Smṛti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ /6/ each ... ... ... ... | 7 | 8 |
| Parāçara, Institutes of (English) ... ... ... ... | 0 | 12 |
| Prabandhacintāmaṇi (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| *Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... ... | 12 | 6 |
| Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| Sraddha Kriya Kaumudi, Fasc. 1–3 ... ... ... ... | 1 | 2 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ /12/ ... ... ... | 0 | 12 |
| *Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... | 12 | 0 |
| Tāṇḍya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Trantra Vartika (English) Fasc. 1 ... ... | 0 | 12 |
| Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. 2–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... ... ... ... | 14 | 4 |
| Tattvarthadhigama Sutram, Fasc. 1 ... ... ... ... | 0 | 6 |
| Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1–3 @ /6/ ... ... . | 1 | 2 |
| Tul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Upamita-bhava-prapañca-kathā (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Uvāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... | 4 | 8 |
| Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... | 5 | 4 |
| Varsa Krya Kaumudi, Fasc. 1–6 @ /6/ ... ... ... | 2 | 4 |
| *Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each | 4 | 8 |
| Vidhano Parigata, Fasc. 1–3 ... ... ... ... | 1 | 2 |
| Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... | 0 | 12 |
| Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... | 2 | 10 |
| Vṛhannāradiya Purāṇa, (Text) Fasc. 1–6 @ /6/ ... ... ... | 2 | 4 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... | 2 | 4 |
| *Tibetan Series.* | | |
| Pag-Sam Thi S'iñ, Fasc. 1–4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5 @ 1/ each ... ... ... ... ... ... | 13 | 0 |
| Rtogs brjod dpag hkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5 @ 1/ each ... ... ... ... ... | 10 | 0 |
| *Arabic and Persian Series.* | | |
| 'Alamgirnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... ... | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1–3 @ /12/ ... ... | 2 | 4 |
| Āin-i-Akbari, (Text) Fasc. 1–22 @ 1/ each ... ... ... | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... | 29 | 12 |
| Akbarnamah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... | 37 | 0 |
| Ditto English Fasc. 1–8 @ 1/ each ... ... ... | 8 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 8 |
| Bādshāhnamah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Catalogue of Arabic Books and Manuscripts ... ... ... | 1 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... | 3 | 0 |
| Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... | 3 | 6 |
| Ditto of Azādī, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... ... | 4 | 8 |
| Iqbālnāmah-i-Jahāngiri, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | 38 | 4 |
| Maāsir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III, 1–10; Index to Vol. I, Fasc. 10–11; Index to Vol. III, Fasc. 11–12; Index to Vol. II, Fasc. 10–12 @ /6/ each ... ... ... | 13 | 2 |
| Maghāzi of Wāqidi, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO HARRASSOWI, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1-4 @ /6/ each ... Rs. | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1 ... | 0 | 6 |
| *Agni Purāṇa, (Text) Fasc. 4-14 @ /6/ each ... | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 and Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-5 @ /6/ ... | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1-6 @ /6/ each ... | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5 @ 1/ each ... | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4-8 @ /6/ each ... | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-4 ... | 1 | 8 |
| Bṛhaddēvatā (Text) Fasc. 1-4 @ /6/ each ... | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1-6 @ /6/ each ... | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1-2 ... | 0 | 12 |
| Catadusani, Fasc. 1 ... | 0 | 6 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-3 @ 2/ each ... | 6 | 0 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1 ... | 3 | 0 |
| Catasahasrika Prajnaparamita, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1-25; III, Part I, Fasc. 1-18. Part II, Fasc. 1-10 @ /6/ each ... | 19 | 14 |
| Çlokavartika, (English) Fasc. 1-4 ... | 3 | 0 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4-17 @ /6/ each .. | 5 | 4 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4 @ /6/ each ... | 5 | 10 |
| Çri Bhāshyam, (Text) Fasc. 1-3 @ /6/ each ... | 1 | 2 |
| Dan Kriya Kaumudi, Fasc. 1-2 ... | 0 | 12 |
| Gadadhara Paddhati Kālasāra, Vol I, Fasc. 1-6... | 2 | 4 |
| Kāla Mādhava, (Text) Fasc. 1-4 @ /6/ each ... | 1 | 8 |
| Kāla Viveka, Fasc 1-5 ... | 1 | 14 |
| Kātantra, (Text) Fasc. 1-6 @ /12/ each ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ /12/ each ... | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1-9 @ /6/ each ... | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1-3 @ /12/ each ... | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1-11 @ /6/ each... | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1-9 & Vol. II, Fasc. 1-9 @ /6/ each ... | 6 | 12 |
| Maṇṇtikā Saṅgraha, (Text) Fasc. 1-3 @ /6/ each ... | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-7 @ /12/ each ... | 5 | 4 |
| *Mīmāṁsā Darçana, (Text) Fasc. 7-19 @ /6/ each ... | 4 | 14 |
| Nyāyavārtika, (Text) Fasc. 1-5 @ /6/ ... | 1 | 14 |
| *Nirukta, (Text) Vol. III, Fasc. 1-6; Vol. IV, Fasc. 1-8 @ /6/ each ... | 5 | 4 |
| Nityacarapaddhati Fasc. 1-7 (Text) @ /6/ ... | 2 | 10 |
| Nityacarapradiph Fasc. 1-2 ... | 0 | 12 |
| Nyayabinduṭika, (Text) ... | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-3 @ /6/ each ... | 3 | 9 |

| | | |
|---|---|---|
| Muntakhabu-t-Tawārikh, (Text) Fasc. 1-15 @ /6/ each ... Rs. | 5 | 10 |
| Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ /12/ each ... | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1-19 @ /6/ each ... | 7 | 2 |
| Ma'āsir-i-'Ālamgīrī, (Text), Fasc. 1-6 @ /6/ each ... | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... | 0 | 6 |
| Nizāmi's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each | 1 | 8 |
| Riyāzu-s-Salātin, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Ditto Ditto (English) Fasc. 1-3 ... | 2 | 4 |
| Tabaqāt-i-Nāṣiri, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Ditto (English) Fasc. 1-14 @ /12/ each ... | 10 | 8 |
| Ditto Index ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni (Text) Fasc. 1-7 @ /6/ each... | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, Text Fasc. 1-6 @ /6/ each .. | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... | 3 | 0 |
| Wis o Rāmin, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Zafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /6/ each .. | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... | [illegible] | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | |
|---|---|---|
| 1. ASIATIC RESEARCHES. Vols. XIX and XX @ 10/ each ... | 50 | 0 |
| 2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3. JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) & 1901 (7), 1902 (9), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members. | | |
| *N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. Centenary Review of the Researches of the Society from 1784-1883 ... | 3 | 0 |
| A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... | 4 | 0 |
| Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... | 2 | 0 |
| Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No. *J.A.S.B.*, 1875) ... | 4 | 0 |
| Introduction to the Maithili Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*, 1882) ... | 4 | 0 |
| 5. Anis-ul-Musharrahin ... | 3 | [illegible] |
| 6. Catalogue of Fossil Vertebrata ... | 3 | [illegible] |
| 7. Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 9. Jawāmiu-l-'ilm ir-riyāzi, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 10. Khizānatu-l-'ilm ... | 4 | 0 |
| 11. Mahābhārata, Vols. III and IV, @ 20/ each ... | 40 | 0 |
| 12. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/ each ... | 18 | 0 |
| 13. Sharaya-ool-Islām ... | 4 | 0 |
| 14. Tibetan Dictionary, by Csoma de Körös ... | 10 | 0 |
| 15. Ditto Grammar " " ... | 8 | 0 |
| 16. Kaçmiraçabdāmṛta, Parts I and II @ 1/8/ ... | 3 | 0 |
| 17. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... | 1 | 0 |
| 18. Memoir on maps illustrating the Ancient Geography of Kasmir by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... | 4 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1-29 @ 1/ each ... | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

2-11-03.

**Books are supplied by V.-P P.**

तिमक्रमे नद्यतिक्रमणे प्रवासे वा यजमानेन कृते न दोष इति। तथा।

"रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा।
प्रवसन्नग्निमान्विप्रः पुनराधानमर्हति॥
बह्वीनामपि चैकस्यामुदक्यायान्तु न व्रजेत्।
एकादशे चतुर्थेऽह्नि गन्तुमिच्छेन्निमित्ततः॥
पत्नीं मुक्त्वा तु यो लोभात् प्रवसेत् पर्वसन्धिषु।
करोति पुनराधानं प्रायश्चित्तमृणादृते॥
नाग्निकार्यस्य वेलायां प्रवसेन्न च पर्वणि।
न विना च निमित्तेन क्रीडाद्यर्थन्तु न व्रजेत्॥
प्रवसेद्धनसम्पत्त्यै न तीर्थाय कदाचन।
इति कूर्मपुराणोक्तं तथा बौधायनेन च॥
समाग्निर्वा सपत्नीको गच्छेत्तीर्थानि मानवः।
पुराणवचनात्साग्नेः प्रवासोऽस्तीति केचन"॥

इत्यादिवचनैरेतद्व्यतिरिक्तस्थले बोध्यम्। पूर्वोक्तमतभेदैर्ज्येष्ठायाः कनिष्ठाया वा प्रवासोपस्थितौ तुल्य एवाधिकारः स्यादिति स्वयमेव साधिते तुल्याधिकारे यजमानवत् प्रवासोपस्थानादिकं स्यादत- आह। नेति। प्रवसन्त्योऽपि योषितोऽग्न्युपस्थानं न कुर्युः। प्रोषिताः सत्यः अपस्थागोपस्थानरूपं न कुर्युः। तर्हि कर्मजन्यफलभोक्तृत्वं न स्यादत आह। सधर्मकं समानधर्मकं फलं अश्नन्त्येव। दृष्टक्लृप्ताधिकान्यायेन प्रवासोपस्थानमेव न स्यादत आह। आगतेति। आगतस्य प्रवासादागतस्य या यजमानस्योपस्थितिरुपस्थानं साऽपि स्त्रीणां सूरयो नेच्छन्ति। न भवतीति भावः॥१७॥१८॥

सीमातिक्रमप्रसङ्गादाह ।

**पत्नी सीमामतिक्रामेद्विना भर्त्त्राऽग्निभिः सह ॥ ६९ ॥**
**तच नाशोऽपरे त्वाहुर्भयाद्याने न दुष्यति ।**
**किन्तु साग्निर्विना भर्त्त्रा गत्वा संस्कृतसर्पिषा ॥ ७० ॥**
**हावयेच्चतुरात्तेन प्राप्ते देशे मनस्वतीम् ।**
**सायंप्रातस्तनौ होमावेवं स्याद्गमनेऽन्वहम् ॥ ७१ ॥**

पत्नीति । पत्नी भर्त्त्रा विनाऽग्निभिः सहाग्निं गृहीत्वेत्यर्थः । सीमामतिक्रामेत्, तच नाशः । अपरे तु भयाद्याने विप्लवाद्यादिना गमने न दुष्यतीत्याहुः । तथाच यद्यरि प्रवसितेऽप्रवसिते वा अकस्मात् परचक्रादिप्राप्तौ अग्नीन् गृहीत्वा सीमातिक्रमणादिके पत्न्या विहिते न दोष इति भावः । तदुक्तं देवयाज्ञिकैः सङ्ग्रहवाक्यम् ।

"एकाकिनी यदा पत्नी वह्निमादाय गच्छति ।
तच नाशोऽपरे त्वाहुर्भयाद्याने न दुष्यतीति ॥
न दुष्येकाकिनी पत्नी प्रयायादग्निभिः सह ।
राष्ट्रभङ्गादिगमने उचितं यानमीदृशमिति च ।
अन्यथा हि प्रवसन्त्यां वह्नयोलौकिकाः खलु" ।

पत्न्याः साग्निप्रवासे यावत्प्रवासं प्रात्यहिकं प्रतिहोमं प्रायश्चित्तमाह । किन्त्विति । किन्तु परन्तु एवं यजमाने प्रोषिते चेदेकाकिनी पत्नी ग्रामाद्बहिरग्नीन् नयेत्, स्वयं वा बहिर्गत्वा होमकाले नागच्छेत्, तदा पुनराधानम् । एवं पत्न्यां प्रोषितायां



यदि यजमानादुक्तापराधद्वयं भवति । एवं बहुपत्नीकस्यापि कस्याश्चित् प्रोषितायां पत्न्यन्तरं विद्यमानमपि अपराधद्वये पुनराधानमिति अर्थादवगम्यते । ग्रन्थान्तरेऽप्युक्तमस्ति । भर्त्त्रा विना साग्निः पत्नी गत्वा अग्निभिः सह गमनं कृत्वा देशे तद्दिनप्राप्तदेशे संस्कृतसर्पिषा संस्कृताज्येन । किं भूतेन? चतुरात्तेन चतुर्गृहीतेन, मनस्वतीं तत्सञ्ज्ञकामाहुतिं हावयेदध्वर्युद्वारा जुहुयात् । ऋत्विजोऽयम् । तदुक्तम् ।

"राष्ट्रभङ्गादिगमने प्राप्ते देशे मनस्वतीम् ।
जुहुयाच्चतुरात्तेन स्मार्त्तेऽग्नौ सर्व्वसंज्ञितम्" ॥

इति याज्ञिकग्रन्थे । आज्यसंस्कारस्य नानात्वान्नोक्त इति । ततः सायंप्रातस्तनौ सायंप्रातर्भवौ होमौ ऋत्विजा कार्यौ न स्वयम् ।

"न वै कन्या न युवती नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्त्तोनासंस्कृतस्तथेति" ॥

स्मरणात् । अन्वहङ्गमने प्रत्यहमेवं स्यात्, मनस्वतीहोमं कुर्यादिति भावः । सायंप्रातस्तनावित्यच तुटः प्रागनादेशः ॥ ६९ ॥ ७० ॥ ७१ ॥

साग्निप्रवासवदत्र वास्तोष्पतीयहोमा अपि भवन्तीत्याह ।

**वास्तोष्पतीयहोमाद्या भवन्त्यचाध्वप्रेषतः ।**
**आपद्यपि च कष्टायां विना पत्न्या *नरान्तरैः ॥ ७२ ॥**

---

* पत्नी,—इति ख० घ० पुस्तकयोः पाठः । पत्नीं,—इति ग० पुस्तके पाठः ।

**सीमाऽतिक्रमणेऽग्नीनां न कथञ्चिदनुग्रहः ।**

यद्यपि षष्ठारम्भते पत्न्याः साग्निप्रवासेऽपि अशेषतोऽविशेषेण वास्तोष्पतीयहोमाद्याः पदार्था भवन्ति । तथाप्यत्रापि किञ्चिद्विशेषमाह । आपदीति । कष्टायामपि महत्यामिति यावत् । आपदि, पत्न्या नरान्तरैः ऋत्विग्भिर्विना अग्नीनां सीमातिक्रमणे कथञ्चित् केनापि प्रकारेणानुग्रहो दोषाभाव इति यावत्, न भवति । अतएव यष्टुः प्रवासोपस्थितौ,

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत्कार्यवान् विप्रो न वृथैव चिरं वसेदिति" ॥

वाक्योक्ता ऋत्विक्कल्पना कृतार्था भवति ॥७२॥

साग्निप्रवासप्रसङ्गादाह ।

**प्रत्यक्षेण नयन्नग्निमुच्छ्वसेच्चेद्विनश्यति ॥ ७३ ॥**
**यदि वाऽनुच्छ्वसन् गत्वा निधायोच्छ्वस्य तं पुनः ।**
**हरेदनुच्छ्वसन्नेव नश्येन्निर्हरणेऽनलः ॥ ७४ ॥**

प्रत्यक्षेति । अग्निं प्रत्यक्षेण समारोपादृते शिक्यादिना नयन् यजमानस्तत्पुरुषो वा चेद्यदि उच्छ्वसेदुच्छ्वासं त्यजेत्, तर्हि विनश्यति संस्कार इति शेषः । स्वग्रामविषयमेतत् ।

"ग्रामात्सीमान्तरं गच्छेत् प्रत्यक्षो हव्यवाहनः ।
शिक्येनोद्वाहयेदग्नीन् पुनराधानमर्हतीति" ॥

स्मरणात् ।

"अग्नीविना समारूढ ऊर्ध्वं शम्यापरासनात् ।



इतोऽग्निर्लौकिको ज्ञेयः श्रुतौ सर्वत्र दर्शनात्" इति च ॥

"कुरुक्षेत्रादितीर्थानां गमने देशविप्लवे ।
समारोप्य विनैवाग्नीन्शोकहेतुर्विपस्थितः ॥
आरोप्याग्नीनरण्योस्तानुद्वस्येत्सहाग्निभिः"—इति च ।

यदि वा अथवाऽनुच्छ्वसन् श्वासोच्छ्वासमकुर्वन् गत्वा स्थानान्तरमिति शेषः । निधाय प्राप्तदेशे स्थापयित्वोच्छ्वस्य पुनस्तमग्निमनुच्छ्वसन्नेव हरेन्नयेत् । तदूर्ध्वं पुनः स्थानान्तरनयने लौकिकत्वमाह । नश्येदिति । एवं स्थाप्यस्थाप्य नयनेऽपि निर्हरणे त्रिवारहरणे अनलोऽग्निर्नश्येदिति ॥७३॥७४॥

सीमान्तरादतिदूरं साग्निप्रवासे विशेषमाह ।

**शकटेनातिदूरं वा हरेद्देशं यथारुचि ।**
**स्वाङ्गेनैवाथवा शम्यापरासात् प्राङ्नयेच्छ्वसन् ॥ ७५ ॥**
**कर्मार्थहरणेऽग्नीनां नानुच्छ्वासादि चोद्यते ।**

शकटेति । यथारुचि यथेच्छन्देशं अतिदूरं वा देशं शकटेनाथवा आहरेन्नयेत् स्वाङ्गेन शिक्यादिना । तथाच दूरप्रवासे समारोप्याग्नीन्नयेत्, प्रत्यक्षनयनपक्षे शकटेन नाङ्गेनेति । शिक्यादिना स्वाङ्गेन नयनेऽभिहितस्यानुच्छ्वासस्यापवादमाह । अथ वा शम्यापरासात्प्रक्षेपात् प्राक् देशं श्वसन् स्वाङ्गेनैव नयेत् । शम्यापरासलक्षणे तु ।

"दक्षिणमदङ्क्त्वा शम्या जवात् क्षिप्ता परापतेत् ।
यावद्देशमसौ देशः शम्याप्रास उदीर्यते" इति ॥

शम्यापरासादूर्ध्वन्तु श्वासगतिर्निरुध्यते । चोदनागतहरणे नैव

दोष इत्याह । कर्मार्थमिति । कर्मणे इति कर्मार्थम् । शामित्र-धिष्ण्यादिषु अग्नीनां हरणे शम्यापरासादूर्ध्वमपि नयने अनुच्छ्वासादिकं, न उच्छ्वासोऽनुच्छ्वासस्तदादिकं शकटादि न चोद्यते नोच्यते । स्वाङ्गेनोच्छ्वसताऽपि हरणं भवतीति भावः । तदुक्तं छन्दोगपरिशिष्टे ।

“कात्यायनमतात् केचिच्छ्वसन्तोऽप्यतिदूरतः ।
प्रत्यक्षेण नयन्त्यग्नीन् शकटेन विनाऽपि तु”—इति ॥
“शकटस्य प्रयाणं यत्तत्पत्न्यग्निसमन्वितम् ।
क्लिष्टस्तत्प्रवृत्त्यर्थं मनसा सह गच्छति ॥
अनस्यारोपयेदग्नींस्तथा चाप्यपि तत्र वै” ।

एतेनाहिताग्नेरनस्यारोहणं प्रत्युक्तं भवति । गोयानत्वात्तस्य । रथस्य तु न निषेध इति ।

“स्वाङ्गेन वा नयेदग्निं कात्यायनमतादपि ।
नयेद्वा ब्राह्मणस्त्वन्योजवेन सह गच्छति” ।

अत्र जवपदोपादानादनुच्छ्वसन्नेवाहरेत् । नानुच्छ्वासादि चोद्यते इति तु कर्मार्थाहरणविषयमिति दिक् ॥७५॥

प्रत्यक्षस्यारूढस्य वाऽग्नेर्मथनेऽन्वारम्भो भवतीत्याह ।

**नदीसन्तरणेऽग्नीनां सीमातिक्रमणे तथा ॥ ७६ ॥**
**सर्वेषाद्यन्तसीम्नोर्वा स्वामिस्पृष्टाः स्युरग्नयः ।**

नदीति । अग्नीनामनोगतानामरणिगतानां वा नदीसन्तरणे समुद्रगाऽसमुद्रगासाधारणनदीपदवाच्यजलसन्तरणे, तस्मिन् काले



इति यावत् । अग्नयः स्वामिस्पृष्टाः स्युः, स्वामित्वस्योभयनिष्ठत्वादुभाभ्यामपि अनोऽन्वारम्भः कार्यः । समारोपणपक्षे त्वरण्योः । अन्यतरेणेति दीपिका । पत्न्यास्त्वङ्गत्वेन स्वामिन एवेत्यन्ये । तथैव सीमातिक्रमणे स्वाम्यन्वारब्धिताः स्युः । अथ वा आद्यन्तसीम्नोरध्युषितग्रामाधिष्ठातव्यग्रामसीम्नोः स्वामिसंस्पर्शिताः स्युः ॥७६॥

अत्राग्निपदेन प्रत्यक्षनयनएव प्राप्नोत्यत आह ।

**प्रत्यक्षमरणि * द्वारमन्यथाऽग्निविनाशनम् ॥ ७७ ॥**

प्रत्यक्षमिति । प्रत्यक्षं साक्षात्त्वेन प्रसिद्धं, अरणिद्वारं अरणिरूपं द्वारम् । शाकपार्थिवादिना समासः । यतोऽस्ति, ततः ते अपि स्वामिस्पृष्टे स्याताम् । अन्यथा यदि स्वामिस्पृष्टे न स्तस्तदाऽग्निविनाशनम् । पुनराधानमिति यावत् ॥७७॥

आत्मारोपणपक्षे किं स्यादत आह ।

**आत्मारोपणपक्षे तु नान्वारम्भणमिष्यते ।**
**न चाप्यारम्भणं केचिल्लौगाक्ष्याद्यनिबन्धनात् † ॥७८॥**

आत्मारोपणपक्षे तु, आत्मनि पाणिद्वारा समारोपणपक्षे अन्वारम्भणं नेष्यते । अर्थलोपादिति भावः । केचिदाचार्या लौगा-

---

* प्रत्यक्षं वाऽरणि, — इति ग॰ पुस्तके पाठः ।

† किचिल्लौगाक्ष्याद्यनिबन्धनात्, —इति क॰ ख॰ घ॰ङ॰ पुस्तकेषु पाठः । परन्त्वसमीचीनः टीकाविरुद्धत्वं ।

विप्रभृतीनां निबन्धनं वचनं, तस्मात्(१) क्वापि कुत्रापि अन्वारम्भणं नेच्छन्ति इति शेषः * ॥७८॥

प्रसङ्गान्नदीलक्षणमाह ।

**कूलद्वयान्तरालन्तु नदीशब्देन नोच्यते ।**
**किन्तु तद्देशवर्त्त्येव जलसङ्घो नदी भवेत् ॥ ७९ ॥**
**अष्टौ धनुःसहस्राणि न प्रस्रवति† यज्जलम् ।**
**नदीशब्दाभिधेयत्वं तस्येच्छन्ति न सूरयः ॥ ८० ॥**
**एकेन नामधेयेन शतयोजनगामि यत् ।**
**उदकन्तन्नदीशब्दवाच्यमित्यपरे जगुः ॥ ८१ ॥**

कूलेति । नदीशब्देन कूलद्वयस्यान्तरालं मध्योनोच्यते किन्तु तद्देशवर्त्त्येव कूलद्वयान्तरालवर्त्ती जलसङ्घो नदीपदवाच्योभवेत् । जलसङ्घं विशिनष्टि । अष्टाविति । अष्टौ अष्टसङ्ख्याकानि धनुषां सहस्राणि, तत्परिमितदेशपर्य्यन्तमिति यावत् । यज्जलं न प्रस्रवति न वहति, तस्य जलस्य नदीपदवाच्यत्वं नेच्छन्ति । अपरे सूरयो-

* इत्यमेव पाठः सर्व्वत्र । अन्वारम्भणं नेच्छन्तीति शेषः, — इति तु भवितुमुचितम् ।

† संस्रवति, — इति ग० पुस्तके पाठः ।

(१) लौगाक्षिप्रभृतीनां वचनात् नान्वारम्भणं, तेषां तन्निषेधकवाक्यादिति भावः । तथाच लौगाक्ष्यादिनिबन्धनादिति मूले लौगाक्ष्यादीनां निबन्धनादित्यर्थपरं न त्वादिपदम् । तथात्वे स्वानिबन्धनादवचनादिति व्याख्यातुमुचितं स्यात् । तदेव तु समीचीनमिति प्रतिभाति ।



ऽभियुक्ता यत् जलमेकेन नामधेयेन यमुनादिनाम्ना शतयोजनगामि चतुःशतक्रोशगामि, तदुदकं नदीशब्दवाच्यमिति जगुः । क्रोशलक्षणन्तु मत्स्यपुराणे ।

"क्रोशोधनुःसहस्रे द्वे गव्यूतिर्द्विगुणा ततः ।
द्विगुणं योजनन्तस्मात् प्रोक्तं सङ्ख्याविशारदैः" ।

धनुर्लक्षणं तत्रैव । चतुर्हस्तोधनुर्दण्ड इति ॥७९॥८०॥८१॥

प्रजार्थिनः कामार्थिनो वा दारान्तरसङ्ग्रहणेऽग्नौ विशेषमाह(१) ।

**कर्त्तव्यं पुनराधानं पुनः परिणये सति ।**
**अग्न्याधेयमुशन्तीह केचिदुद्वाहकर्म्मणि ॥ ८२ ॥**
**लौगाक्ष्याद्यनिबद्धत्वादुभयन्नेति केचन ।**
**तत्रौपासनिनी पत्नी परा पूर्वाऽग्निहोत्रिणी ॥ ८३ ॥**

कर्त्तव्यमिति । पुनः परिणये विवाहे कृते सति तदुत्तरं पुनराधानं कर्त्तव्यम् । केचिदाचार्या इहोद्वाहकर्म्मणि जीवत्पत्नीकस्य पुनर्विवाहोत्तरमग्न्याधेयमपूर्वाधानमुशन्ति वदन्ति । यद्वा, अग्न्याधेयं पुनराधेयम् । केचनाचार्या लौगाक्ष्यादिभिरनिबद्धत्वादनुक्तत्वादुभयं पूर्वोक्तं नेति ब्रुवन्ति । यदोभयमपि लौगाक्ष्यादिमतेन नानुष्ठीयते, तदा परा पत्नी द्वितीया औपासनिनी विवाहाग्निसंयोगात् । पूर्वा प्रथमा अग्निहोत्रिणी । तत्रैव* सहाग्नीनामाधानात् ॥८२॥८३॥

अथ सपत्नीकस्य पुनः परिणये मतान्तरेण विशेषमाह ।

* तथैव, — इति क० ख० पुस्तकयोः पाठः ।

(१) विशेषमाह, — इति भवितुमुचितम् ।

**पुनः परिणयेऽग्नीनामुत्पत्तावीदृशोविधिः ।**

पुनः इति । पुनः परिणये स्वस्य पुनर्विवाहे कृते द्वितीयाया अपि आधानसंस्कारसंस्कार्यताऽर्हत्वात्, अग्नीनां चेताग्नीनामुत्पत्तावीदृशोवक्ष्यमाणोविधिः प्रयोगविधिः कर्त्तव्य इति शेषः ॥

तत्रादौ पुनः परिणये हेतुमाह ।

**आहिताग्निः प्रजाहीनां योषाऽपत्यां मृतप्रजाम् ॥८४॥**
**दशमे द्वादशे पञ्चदशे संवत्सरे स्त्रियम् ।**
**त्यक्त्वाऽन्यामुद्वहेत् कन्यां सद्यस्त्वप्रियभाषिणीम् ॥ ८५ ॥**

आहितेति । आहिताग्निरग्नय आहितायेनासावाहिताग्निः । वाऽऽहिताग्न्यादिषु परमिति सूत्रात् पूर्वनिपातः । प्रजाहीनां केवलबन्ध्यां योषाऽपत्यां कन्याप्रसूं मृतप्रजां मृतापत्यां स्त्रियमनुक्रमेण दशमे द्वादशे पञ्चदशे संवत्सरेऽप्रियभाषिणीं तु सद्यस्त्यक्त्वाऽन्यां कन्यामुद्वहेत् पुनर्विवाहं कुर्यादित्यर्थः । कन्यापदमक्षतयोनिपाणिग्रहणार्थम् । स्मर्यते विंशतिप्रसूतायाः पुनर्विवाहः ।

"यदा विंशतिधाऽपत्यं प्रसूयेताङ्गनाजनः ।
पुनर्विवाहं तस्यास्तु कुर्यात् स्वकुलशान्तये" इति ।

दशमवर्षादिग्रहणं परीक्षार्थम् । न हि विज्ञायतेऽकस्माद्वन्ध्येति * ॥८४॥८५॥

विधिमाह ।

* न हि बन्ध्या विज्ञायतेऽकस्माद्वन्ध्येति, – इति ख० घ० पुस्तकयोः पाठः । न हि बन्ध्या विज्ञायते कस्माद्वन्ध्येति, – इति क० पुस्तके ।



**आरोप्याग्नीनरण्योः स्वानुद्वसेत्सहाग्निभिः* ।**
**उद्वासनेष्टिं कृत्वाऽथ समारोप्य हविर्भुजम् ॥ ८६ ॥**
**कृत्वा ब्रह्मौदनाग्निञ्च तथौपासनपावकम् ।**
**ब्रह्मौदनादिकं सिद्धं कृत्वाऽग्न्याधिं विधानतः ॥ ८७ ॥**
**पवित्रेष्टिं तन्तुमतीं चैधातव्यां क्रमाद्यजेत् ।**
**ऐन्द्राग्नेनैव पशुना यष्टव्यं केवलेन वा ॥ ८८ ॥**

अरण्योः स्वान् पूर्वभार्यया सहाहितानग्नीनारोप्य समारोप्याग्निभिरग्न्यधिकरणीभूतारणीभ्यां सहोद्वसेत् । अत्रोत्पूर्वकोवसतिर्देशान्तरसूचकः । तत्र विहरणादिकं कृत्वा उद्वासनेष्टिं कुर्यात् । ततोहविर्भुजमग्निं समारोप्य । तथा, पूर्ववदौपासनपावकमौपासनाग्निमेकदेशेन साकल्येन वा ब्रह्मौदनाग्निं कृत्वा तस्मिन् ब्रह्मौदनादिकं सिद्धं कृत्वा, विधानतः पूर्वोक्तेन विधानेन । सार्वविभक्तिकस्तस् । अग्न्याधिं आधानं कुर्यात् । तदुत्तरं क्रमादनुक्रमेण पवित्रेष्टिं तन्तुमतीं चैधातव्येष्टिं यजेत् कुर्यादित्यर्थः । वेत्यथवा । इष्टित्रयस्थाने ऐन्द्राग्नेन पशुना केवलेनैव एकेनैव यष्टव्यम् ॥८६॥८७॥८८॥

मतभेदेनाह ।

**अथवा पुनराधानमेवाचेष्टं न चेतरत् ।**
**शिष्यगां गुरुगां गर्भहन्त्रीं † त्यक्त्वैतदाचरेत् ॥ ८९ ॥**

* सदाग्निभिः, – इति ङ० पुस्तके पाठः ।

† गर्भहर्त्रीं, – इति ग० पुस्तके पाठः ।

धर्मप्रजासम्पन्नेषु दारेषु यदि कामतः ।
अन्यान् समुद्वहेद्दारांस्तदा पूर्वोदितं विधिम् ॥९०॥
अनुष्ठाय मृगारेष्ट्या यजेतात्मविशुद्धये ।

अथवाऽत्र पुनः परिणये पुनराधानमेवेष्टमेतरत् । पवित्रेष्ट्यादिकं न भवतीति भावः । एवमेवाप्रियभाषिणीवन्ध्यान्यगामिनीं गुरुगामिनीं गर्भघ्नीं सद्यस्त्यक्त्वा एतत् पूर्वोक्तमाचरेत् । यदि दारेषु धर्मप्रजासम्पन्नेषु पातिव्रत्यधर्मेण प्रजाभिः सम्पन्नेषु सत्सु कामतः कामार्थमेव अन्यान् दारान् समुद्वहेत् पुनर्विवाहं कुर्यात्, तदा पूर्वोदितं विधिं अनुष्ठायात्मविशुद्धये स्वपापविनाशार्थं मृगारेष्ट्या यजेत सकृत् । एकविंशतिवारमावृत्त्येति बौधायनसूत्रे ॥८९। ९०॥

पक्षान्तरमाह ।

नादध्याद्वा मृगारेष्टिं पूर्वपत्न्या सहाचरेत् * ॥ ९१ ॥

नादध्यादिति । वा नादध्यात् पूर्वोक्तविधिनाऽऽधानं न कुर्यात् । आत्मविशुद्धये पूर्वपत्न्या सह मृगारेष्टिमात्रमाचरेत् ॥९१॥

यदा कनिष्ठया सहाधानं न कृतं, तत्पक्षे विशेषमाह ।

नित्याग्निहोत्रं प्रेतायै न स्त्रियै दातुमर्हति ।
नाप्यादधीत पूर्वाग्निष्वग्निहोत्रं समाचरेत् ॥ ९२ ॥

* समाचरेत्, — इति ग० पुस्तके पाठः ।



नित्याग्निहोत्रं, नित्यमग्निहोत्रं क्रियते यस्मिन् तन्नित्याग्निहोत्रमग्निमिति यावत् । पूर्वप्रेतायै कनिष्ठस्त्रियै दातुं नार्हति । इमे प्रेताग्नय इति बुद्धिलेखेन नापि आदधीत पुनराधानमपि न कुर्यात् । किन्तु पूर्वाग्निषु अग्निहोत्रं समाचरेत् कुर्यात् । अग्निहोत्रपदं प्रकृतिविकृत्युपलक्षकम् । अविशेषात् ॥९२॥

यथा प्रेताऽग्नीनार्हति तथा जीवन्त्यपि कनिष्ठाऽऽधानासहकृता सती कर्मजन्यफलभाक् नेत्याह ।

ज्येष्ठायां विद्यमानायां कनिष्ठायै स्वयोषिते ॥
काम्यं नित्याग्निहोत्रं वा न कथञ्चित् प्रयच्छति ॥ ९३॥

ज्येष्ठेति । ज्येष्ठायां ज्येष्ठपत्न्यां विद्यमानायां सत्यां कनिष्ठायै स्वयोषिते, काम्यं कर्म नित्याग्निहोत्रमुभयजन्यमदृष्टमिति यावत् । कथञ्चित् किमपि न प्रयच्छति । नादृष्टभाग्भवतीति भावः ॥ ९३॥

मतभेदेनाह ।

स्त्रीमात्रमविशेषेण दग्ध्वाऽन्ये वैदिकाग्निभिः ।
विवाह्यादधते यद्वाऽऽधानमेवास्ति चेद्वधूः ॥ ९४ ॥

अन्ये आचार्याः स्त्रीमात्रं अविशेषेण ज्येष्ठत्वादिविशेषमन्तरा वैदिकाग्निभिर्दग्ध्वा विवाह्य पुनर्विवाहं कृत्वाऽऽदधते । यदा वधूर्वध्वन्तरमस्ति तदाऽऽधानमेव । अग्नीनां प्रेतायै दत्तत्वात् ॥९४॥

यदि न स्याद्विवाहस्तदा किमित्याह ।

**एकाकी वाऽऽदधीताग्नीन् विवाहश्चेन्न सिध्यति ।**
**नित्येष्ट्याग्रयणान्यग्निहोत्रं कर्मास्य नेतरत् ॥ ९५ ॥**

एकाकीति । चेद्यदि विवाहो न सिध्यति न भवेत्, तर्हि एकाकी वाऽग्नीनादधीत। एतेन कुशपत्न्यादिकल्पनां विनैव विधुराग्निहोत्रं सिद्धम् । तत्र किंसिद्धमित्याह । अस्य विधुराग्निहोत्रिणः तेष्वग्निषु नित्येष्ट्याग्रयणानि । नित्येष्टी दर्शपूर्णमासौ । यद्यप्येतयोर्जीवननिमित्तेन नैमित्तिकत्वं प्रतिभाति, तथापि साधितं नित्यत्वं सिद्धान्ते । यद्वा, नैमित्तिकमपि नित्यमेव । यतोऽस्याकरणे प्रत्यवायजनकत्वमुत्पत्स्यमानदुरितप्रतिबन्धकत्वञ्चास्तीति दिक् । इष्टिग्रहणात्पश्वादिकं न भवति । नित्योपादानात्काम्येष्वनधिकारः । आग्रयणं अग्रस्याश्नस्यायनं प्राप्तिरिति बह्वृचब्राह्मणभाष्यम् । अतस्तदप्यवश्यं कर्त्तव्यमन्यथा जीवनविरोधात्। स्मर्यन्ते च तद्विनाऽऽशने बहवोदोषाः ।

"अनिष्ट्वा तु नवैः सस्यैः देवानथ कृताग्नये ।
प्राणानेवात्तुमिच्छन्ति येऽश्नन्ति काममोहिताः" इति ।

तदत्र सस्यग्रहणात्सर्वेषां यागसाधनार्थत्वप्राप्तौ, व्रीहीन् यवान् वा हवींषि, व्रीहिभिर्यजेत यवैर्वा यजेतेति सूत्राभ्यामुभयोरेव यागसाधनत्वावगमादुभाभ्यामनुष्ठाने तत्तत्सहभावजनितसस्यानामनुग्रहे चैत्रवार्षिकसस्यानुग्रहार्थं श्यामाकवेणवानामपि सङ्ग्रहः । न त्वाग्रयणात्पूर्वं नूतनगुल्मलतादीनां तत्तत्कालीनानामभक्ष्याणामित्यभियुक्ताः । सस्यानामेवेत्यन्ये। व्रीहियवानामित्यपरे। अग्नौ हूयते



यत्, तदग्निहोत्रं पयः* तद्यत्र साधनत्वेन विद्यते, तदग्निहोत्रं कर्मनामधेयम् । तत्सदृशं कर्म भवतीति इतरत् चातुर्मास्यादिकं न ॥९५॥

मतान्तरमाह ।

**एकाक्याधानपक्षस्तु[†] कर्मदीपे निराकृतः ।**
**जुह्वन्त्यन्ये मृतस्त्रीकाः कुशपत्नीसमन्विताः ॥ ९६ ॥**
**जुहोति न मृतस्त्रीक एकाकी पूर्ववह्निषु ।**
**भरद्वाजमतश्चैतत् कर्मदीपे निरूपितम् ॥ ९७ ॥**

एकाकीति । एकाक्याधानपक्ष एकाकिनोविधुरस्याधानपक्षः पूर्वोक्तः कर्मदीपे छन्दोगपरिशिष्टे निराकृतः कात्यायनेनेति भावः । कर्मण्युभयसाकाङ्क्षत्वात्पदार्थानाम् । कुशपत्नीविधानमाह । अन्ये आचार्याः मृतस्त्रीकाः कुशपत्नीसमन्विताः सन्तः जुह्वन्ति। ब्रह्मब्राह्मणाभावयोरिव श्रौतादिकर्मश्राद्धयोः। अत्रैव भरद्वाजमतमाह। मृतस्त्रीक एकाकी पूर्ववह्निषु न जुहोति । एतद्भरद्वाजमतं कर्मदीपे निरूपितम् । तेनैतन्मते पूर्वपदग्रहणात् पूर्वं एवाग्नयोनाधानम् ॥९६॥९७॥

मृतपत्नीकस्य विवाहोत्तरं पुनराधानमेव स्वमतेनाह ।

**आहिताग्निर्मृतस्त्रीक आदधानोऽन्यया सह ।**
**कृतारम्भादिधर्मोऽपि कृतसोममखोऽपि वा ॥ ९८ ॥**

---

* अग्निहोत्रं पयः, – इत्येतावन्मात्रपाठः ख० घ० ङ० पुस्तकेषु ।

† एकस्याधानपक्षस्तु, – इति ग० पुस्तके पाठः ।

**अकृतारम्भसोमेज्यां भार्यामेवानुमन्यते* ।**
**नास्ति माहेन्द्रसान्नाय्यं सन्ति सारस्वतादयः ॥ ९९ ॥**

आहिताग्निरिति । मृतस्त्रीको मृतपूर्वपत्नीक आहिताग्निरन्यया परिणीतया सह आदधान अपूर्वाधानं कुर्वाणः कृता अनुष्ठिता आरम्भधर्माः सारस्वतहोमाद्याधेयेन तथाभूतः, कृतः सम्पादितः सोमयागो येनैवम्भूतोपि सन् । अकृते आरम्भसोमेज्ये यया एवम्भूताम् । पूर्वमस्या अविद्यमानत्वात् । भार्यां पत्नीमेवानुवर्त्तते अनुस्वीकरोति । अपूर्वाधानमेव भवतीति भावः । अतः माहेन्द्रसान्नाय्यं नास्ति न भवति । कृतसोमवतो यजमानस्यैव तत्राधिकारात् । यजमानत्वस्य व्यासज्यवृत्ति । उक्तञ्चैतत् श्रौते यथागावग्निमादधीयातामित्यत्र ।

"कर्तृरूपस्य चैकोऽपि तदधिष्ठानभेदतः ।
युक्तन्द्विवचनं यद्वदग्नीषोमौ हि दैवते" इति ॥

अतएवोक्तं तुल्य एवाधिकार इति । सारस्वतादयः शाखाविशेषेणाभिहितास्तत्सञ्ज्ञका होमास्तेऽपि भवन्ति अपूर्वत्वादेतस्याः ॥ ९८॥९९॥

मतान्तरमाह ।

**केचित्पत्युः प्रधानत्वान्नाद्रियन्ते तु योषितम् ।**
**तेनेष्टौ स्यान्महेन्द्रेज्या न स्युः सारस्वतादयः ॥ १०० ॥**
**आहिताग्नेर्मृतस्त्रीकस्याधानं सन्न्यसिष्यतः ।**
**सन्न्यासं वारयन्त्यन्ये यावज्जीवाग्निहोत्रिणः ॥ १०१ ॥**

* भार्य्यामेवानुवर्त्तते,—इति टीकासम्मतः पाठः ।



केचिदिति । केचिदाचार्याः पत्युः पुरुषस्य प्रधानत्वात् साक्षादङ्गत्वात् योषितं पत्नीं पुरुषाङ्गत्वादप्रधानत्वान्नाद्रियन्ते आदरं न कुर्वन्ति । पुनराधानमेव कुर्वन्तीति भावः* । तदुक्तं रामाण्डारभाष्ये । यज्ञपात्राणीव पत्नी न यज्ञाङ्गमिति । किन्तु यज्वाङ्गम् । अतः पत्न्यनधिकारेऽपि† न निवर्तते भार्य्यम्‡ । स्त्रीणां पतिप्रयुक्ताधिकारोपजीवनात् । तथाच क्षत्रियायाः अग्नीषोमीये नाधिकारदर्शनमप्रधानत्वाच्च । यदा चाङ्गेन विधुरतां नीयादिति यजमानस्याङ्गं पत्नीति दर्शनात् । अतएवेयमभियुक्तोक्तिः सङ्गच्छते । यदा हि पत्युः पत्न्याश्च आहवनीयादिकामनयाऽऽधानेऽधिकारः सिद्धस्तदा क्लृप्तविद्ययैव कर्मनिर्वाहे तस्या अक्लृप्तविद्यापरिकल्पनपरिजिहीर्षया सहाधिकार उपपद्यते । तस्या आहवनीयाद्यकामनायान्तु न सहाधिकारः भर्त्रधिकारे केवलाज्यावेक्षणादौ कर्तृत्वमात्रं तस्याः । अध्वर्य्वादेरिव सोमादौ । एवमाहवनीयादिसाध्येषु दर्शपूर्णमासादिष्वपि पत्न्याः फलकामनायां सहाधिकारः । तदभावे तु पत्युरेवाधिकारः । पत्न्यास्तु केवलमाज्यावेक्षणादौ कर्तृत्वमात्रं नाधिकार इति । अतएवावोचत् ।

"रजोदोषे समुत्पन्ने नित्यं नैमित्तिकं कार्यम्"—इति ।

काम्यमपीष्यते केचित् । तेन कारणेनेष्टौ प्रकृतौ महेन्द्रेज्या

* आदरं न कुर्व्वन्तीति भावः,—इति क० पुस्तके पाठः ।
† पत्न्यधिकारेऽपि,—इति ख० घ० पुस्तकयोः पाठः ।
‡ साध्यं,—इति क० पुस्तके पाठः । सान्नाय्यं,—इति तु प्रतिभाति ।

स्यात् सन्न्यासं भवति । पारस्वतादयो होमाः प्रारम्भकालीया न तु कृतप्रारम्भहोमेज्यावत्त्वाद् यजमानस्य । पत्न्यास्तु यजमानपदानभिधेयत्वात् ।

आश्रमादाश्रमान्तरं गच्छेदिति क्रमप्राप्तस्याऽनुवादमाह । मृतपत्नीकस्याहिताग्नेः सन्न्यसिष्यतः सन्न्यासं कर्तुमिच्छतः पुरुषस्याधानं नेत्यनुषङ्गः । भरद्वाजेनैकाकिन आधानस्य निराकृतत्वात् । मतान्तरमाह । अन्ये यावज्जीवाग्निहोत्रिणः सन्न्यासं वारयन्ति निषेधयन्ति । यतोहि यावज्जीवमग्निहोत्रसम्बन्धस्य विवक्षितत्वात् । आगूः कृत्वा न क्रियते स पाप्मा भवतीत्यर्थश्रवणाच्च * ॥१०१॥

कर्मलोपे नैमित्तिकमाह ।

हुतेषु पक्षहोमेषु पक्षत्रयमनन्तरम् ।
कर्त्तव्यं पुनराधेयं मथ्यमानो हुताशनः ॥ १०२ ॥
दृष्टमात्रोऽनुगच्छेच्चेत्तत्र तस्य विनाशनम् ।
शतशोऽनुगमे चान्यैः पुनर्निर्मथ्य जप्यते † ॥ १०३ ॥
नष्टे मथितमात्रे वा समारोपयजुर्जपेत् ।
पुनर्निर्मथ्य जप्तव्यं यजुस्तूपावरोहणम् ॥ १०४ ॥

पक्षाणान्त्रयं पक्षत्रयं, अनन्तं पक्षहोमेषु हुतेषु सत्सु अनन्तरं चतुर्थपक्षेऽपि पक्षहोमे कृते सत्यनन्तरशब्दार्थः ‡ । पुनराधेयं कर्त्त-

* अर्थवादश्रवणाच्च, — इति भवितुमुचितम् ।
† शतशोऽनुगमेर्वान्यैः पुनर्निर्मथ्य जायते, — इति ग० पुस्तके पाठः ।
‡ सतीत्यनन्तरशब्दार्थ इति भवितुमुचितम् ।



व्यम् । पक्षापनिरूपितनिमित्ततावच्छेदकावच्छिन्नकारणताककार्यस्य पक्षहोमस्य तन्निवृत्तिरेव पक्षहोमप्रयोजिकेत्यन्ये । तेन, आपदेवावधिस्तत्र न पक्षगणनावधिरिति सङ्गच्छते । एकप्रयोजकत्वप्रसङ्गादाह । मथ्यमानोमथ्यतेऽसौ मथ्यमानः । मन्थनसमानाधिकरणकालोद्धताग्नमोऽग्निः दृष्टमात्रः सन् अरणिस्थ एव यन्त्रविमोके कृतेऽकृते वा चेदनुगच्छेत्, तत्र तस्मिन्निमित्ते तस्याग्नेर्विनाशनम् अग्निनिष्ठसंस्कारनाशः, पुनराधेयमिति यावत् । मतान्तरमाह । अन्यैराचार्यैः शतशोऽनुगमेऽपि अरणिस्थस्याग्नेरेवप्रकृतत्वात् पुनर्निर्मथ्य जप्यते । यस्यां शाखायामग्निजननोत्तरमुपावरोहणजपोऽभिहितोऽस्ति तज्जपः कार्य इत्यर्थः । पक्षान्तरमाह । वेत्यथवा, मथितमात्रे, खरस्थापनात् पूर्वमेवेति मात्रशब्दार्थः । नष्टे सति, समारोपयजुर्जपेत् । समारोपणमन्त्रजपं यत्राग्निरुपशान्तस्तत्स्थानमभिमृश्य जपेदित्यर्थः । पुनर्निर्मथ्य उपावरोहणं तत्सञ्ज्ञकं यजुर्मन्त्रं जप्तव्यं जपेदित्यर्थः । विध्यर्थे तव्यत् । तथाच पुनराधेयं नेत्यर्थः ॥१०२॥१०३॥१०४॥

उपघाते नैमित्तिकमाह ।

जलेन हेतुना वह्निरुपशान्तो यदा भवेत् ।
कर्त्तव्यं पुनराधेयं * यज्ञपार्श्वे निरूपितम् ॥ १०५ ॥
तद्दैव † पुनराधेयमग्नावनुगते सति ।
असमाधाय चेत् स्वामी सीमामुल्लङ्घ्य गच्छति ॥ १०६ ॥

* पुनराधानं, — इति ग० पुस्तके पाठः ।
† तदेव, — इति क० ख० पुस्तकयोः पाठः ।

जलेनेति। जलेन हेतुना जलरूपकारणेन वह्निर्यदोपशान्तः सामस्त्येनैकदेशेन वा, तदा यज्ञपार्श्वकं पुनराधानं कर्त्तव्यम्। एतत्सर्वसम्मतम्। पुनराधेयनिमित्तमाह। अग्नाविति। अग्नौ अनुगते सति चेद्यदि असमाधाय मन्थनेन अग्न्युत्पादनपूर्वकमुपसमाधानमकृत्वा स्वामी यष्टा पत्नी वा, उभयोरपि स्वामित्वात्साम्येन, सीमामुल्लङ्घ्य अपे किञ्चिदपि गच्छति। तदेव पुनराधेयं, भवतीति शेषः ॥१०५॥१०६॥

उपघाते नैमित्तिकमाह।

शूकररासभकाकशृगालैः
कुक्कुरकुक्कुटमर्कटशूद्रैः*।
अन्त्यजपातकिभिः कुणपैर्वा
सूतिकयाऽपि रजस्वलया वा ॥ १०७ ॥
रेतोमूत्रपुरीषैर्वा पूयाश्रुश्लेष्मशोणितैः।
दूषास्थिमांसमज्जाभिरन्यैर्वाऽपि जुगुप्सितैः ॥ १०८ ॥
आरोपितारणीस्पर्शे कृतेऽग्नेः† स्पर्शनेऽपि वा।
आत्मारूढेषु मज्जेद्वा वदेद्वा पतितादिभिः ॥ १०९ ॥
अथ वा योषितं गच्छेदनृतौ काममोहितः।
वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम् ॥ ११० ॥

---

* कुक्कुटमर्कटशूद्रैः,—इति द्वितीयचरणपाठः क० ख० पुस्तकयोः। टीकासम्मतोऽप्ययं पाठः।

† कृतेऽग्नौ,—इति क० ख० पुस्तकयः पाठः।



सूकरेति। सूकरो द्विविधोऽपि वराहः। रासभकाकौ प्रसिद्धौ। शृगालः क्रोष्टा। कुक्कुटस्ताम्रचूडः। मर्कटोऽनेकजातीयो वानरः। उपलक्षणया श्वाऽपि सङ्गृह्यते। श्वसूकरेत्यपि पाठः। शूद्रः सच्छूद्रोऽसच्छूद्रः तत्सदृशोश्च समानन्यायात्। अन्त्यजः सप्तविधः।

"रजकश्चर्मकश्चैव नटो वुरुड एव च*।
कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः" ॥

पातकिन उपपातकिव्यतिरिक्ताः। सर्वेषामपि अतद्विनाभावित्वात्। कुणपं शवम्। सूतिकया दशराचादर्वाक्। तदुत्तरं सूतिकाऽव्यवहारात्। रजःस्वलया पुष्पवत्याऽऽचतुर्थाहः। तदुत्तरमतद्व्यवहारात्। रेतसा पुंसः स्त्रियो वा, रेतःसामान्यात्। मूत्रपुरीषमप्युभयोः, सामान्यात्। पूयः मलविशेषः क्षतादिजन्यः। अश्रु आर्त्यनार्त्तिभेदाद् द्विविधमपि। श्लेष्मा नासिकामलः कफश्च। इदं लालाया उपलक्षणम्। अतएव, मुखविप्रुषपातभयाद्धमने मक्षिकादिकं धार्यम्। शोणितं प्रसिद्धम्। एतज्जीवमात्रस्य। अस्थि जीवजातस्य, लोमातिरिक्तम्। मांसमपि तथैव। मज्जा धातुविशेषः शुभ्रं घनं जलम्। जीवमात्रस्यैतत्। एतैः सूकरादिभिस्तथा अन्यैः उक्तेभ्योव्यतिरिक्तैर्जुगुप्सितैर्निन्द्यैर्वसाघर्मकर्णमलादिभिरारोपितारणीस्पर्शे समारूढारणिस्पर्शे। वेत्यथवा, अग्नेरसमारोपितस्वरस्याग्नेः स्पर्शने कृते। तथा, आत्मारोपितेषु मज्जेद्गङ्गादिषु मज्जनं कुर्यात्। तच्च सग्निरस्कम्। अग्निरस्कन्तु कार्यमेव, स्नानस्याधिकारिविशेषणत्वात्। पतितादिभिः, आदिपदादन्त्य-

---

* नटो वरुड एव च,—इति ग्रन्थान्तरधृतः पाठः।

आदिभिश्च, सन्निधानात् । तथा, काममोहितः सन् ऋतुव्यतिरिक्तकाले योषितं स्वस्त्रीमपि गच्छेत् * एषु पूर्वोक्तेषु निमित्तेषु सत्सु केचिदाचार्या अग्निविनाशमिच्छन्ति। अग्रे पक्षान्तरस्य वक्ष्यमाणत्वात् केचिदित्युक्तम् । तत्रात्मारोपणपक्षे मन्थनादिकं निमित्तम् । असमारूढारणिसमारूढपक्षे तु जुहुषितान्तानि निमित्तानि । तत्रार्तवमैथुनस्य, ऋतुस्नातां तु यो भार्यामित्यादिधर्मसंहिताभिषोदितत्वाच्च दोषः ॥१०७॥१०८॥१०९॥११०॥

तत्र विशेषमाह ।

**तथारणीगते वह्नौ नष्टे† स्यात् पुनराहितिः ।**
**इतरेषु निमित्तेषु त्वग्न्याधेयं प्रचक्षते ॥ १११ ॥**

तथेति । तत्र तेषु निमित्तेषु अरणिगते वह्नौ अर्थात् समारोपितारण्योर्जातेषु सत्सु अग्नौ नष्टे पुनराहितिः पुनराधानम् । यद्वा, नष्टे इति वह्निविशेषणम् । इतरेषु प्रत्यक्षात्मारोपितेष्वग्निषु, निमित्तेषु जातेषु अग्न्याधेयं पुनराधेयं प्रपद्यते ॥१११॥

पक्षान्तरमाह ।

**यद्वा सर्वोपघातेषु पुनस्त्वेति समिन्धनम् ।**
**द्रव्यस्याग्न्युपघाते च‡ द्रव्यशुद्धिसमिन्धने ॥ ११२ ॥**

---

* स्वस्त्रीमभिगच्छेत्, — इति ख॰ पुस्तके पाठः ।

† दुष्टे, — इति ग॰ पुस्तके पाठः ।

‡ द्रव्यस्याग्न्युपघातेच, — इति ग॰ पुस्तके पाठः ।



यद्वेति । सर्वोपघातेषु पूर्वोक्तेषु, पुनस्त्वेति मन्त्रेण समिन्धनं समिदाधानम् । मन्त्रस्याग्नेः पुनः समित्प्रक्षेपेण प्रदीप्ततरकरणमित्यापस्तम्बीयात् ।

प्रसङ्गादाह ।

द्रव्यस्येति । द्रव्यस्याग्न्युपघाते, द्रव्यस्य चरुपात्रादिस्थोऽग्निस्तदुपघाते, यथोक्ता द्रव्यशुद्धिः पात्रशुद्धिः समिन्धनं पूर्वोक्तं भवति । यथा तप्तचरुपात्रे श्वादिस्पृष्टे सति भस्मादिना पात्रशुद्धिः तद्गत्यग्न्यवयवस्पर्शः समिन्धनञ्च ॥११२॥

अरणीसमारोपप्रसङ्गादाह उपघात प्रसङ्गादाह ।

**आरोपितारणी चोभे एका वा यदि नश्यति ।**
**तत्राग्न्याधेयमिच्छन्ति पुनराधानमेव वा ॥ ११३ ॥**

आरोपितेति । आरोपितारणी कृतसमारोपारणी उभे द्वे वा अथ वा एका यदि चेन्नश्यति । तस्मिन् निमित्ते पुनराधेयं पुनराधानमेव वा भवति । इच्छाविकल्पोऽयम् ॥११३॥

बौधायनमतेनाह ।

**एकारण्यां विनष्टायामस्ति चेदितराऽरणिः ।**
**तां छित्वा मन्थनं प्रोक्तं भाष्ये बौधायनीयके ॥ ११४ ॥**

एकेति । एकारण्यां एकस्यामधरोत्तरयोरन्यतरस्यामरण्यां विनष्टायां सत्यामितराऽन्यतराऽरणिरस्ति चेत् । तामदुष्टामेकारणिमेव छित्वा भागद्वयं कल्पयित्वा मन्थनं कार्यं यथोक्तम् । इति बौधाय-

नीयके, बौधायनेन प्रोक्तं बौधायनीयं तदेव बौधायनीकं, स्वार्थे कप् । एवम्भूते भाष्ये भाष्यन्ते वेदार्थायेन तद्भाष्यं सूत्रं, तस्मिन् प्रोक्तम् ॥११४॥

एतस्य वक्ष्यमाणादिसम्मत्या प्रामाण्यमाह ।

एतदङ्गीकरोतीह भवनागोऽपि बह्वृचः ।
नष्टायाः प्रतिपत्तिः स्यादुभयारणिनाशवत् ॥ ११५ ॥

बह्वृचः भवनागोऽपि इहास्मिन् एतत् पूर्वोक्तं बौधायनोक्तं अङ्गीकरोति । नष्टाया अन्यतरारण्याः प्रतिपत्तिः उभयारणिनाशे वक्ष्यमाणा या प्रतिपत्तिः तद्वत् कार्येतिशेषः । भवतञ्च इति मन्त्रेण नष्टामेकामप्सु निमज्जयेदित्यर्थः ॥११५॥

प्रसङ्गादप्रकृतमप्याह ।

अरणी मन्थनाशक्ते जन्तुभिर्मन्थनेन वा ।
स्यातां चेदरणी तूभे ग्राह्ये शास्त्रोक्तलक्षणे ॥ ११६ ॥

अरणी इति । अरणी उभे अपि मन्थनाशक्ते जन्तुभिः कीटैर्मन्थनेन वा हेतुना जयत्नशान्मन्थनाक्षमे स्यातां चेत्, तदा तु पुनः शास्त्रोक्तलक्षणे तुले नूतने ग्राह्ये । अत्र हेत्वर्थकतृतीयोपात्तकीटपदोपादानात् मन्थनेऽशक्तौ हेतुभूतकठिनत्वग्रन्थिमत्त्वसुषिरवत्त्वादीनामप्युपलक्षणया सामान्यप्रत्यासत्त्या सङ्ग्रहः । यथा काकेभ्योदधिरक्ष्यतामित्यादिषु ॥११६॥

तद्विधिमाह ।



श्वोभूतेऽनुष्ठिते दर्शे तस्मिन् जीर्णारणिद्वयम् ।
शकलीकृत्य पाश्चात्ये वह्नौ निःक्षिप्य दीपयेत् ॥ ११७ ॥
ते उभे अरणी तत्र दीप्तेऽग्नौ धारयन् जपेत् ।
उद्बुध्यस्वाग्नइत्येतदयन्ते योनिरित्यपि ॥ ११८ ॥
ततो दक्षिणहस्तेन नूतनामुत्तरारणिम् ।
गृहीत्वा सव्यहस्तेन गृहीत्वा चाधरारणिम्* ॥ ११९ ॥

श्वोभूत इति । प्रातरनुष्ठीयमानदर्शयागात्पूर्वदिनेऽमायां प्रातरग्निहोत्रं कृत्वा अश्वत्थाद्धव्यवाहेत्यादिमन्त्राभ्यामाहरणं पूर्ववद्दृयथोक्तायामविस्तारयोर्निजारण्योरिति श्वोभूतपदेन व्यज्यते । अत्र दर्शग्रहणात्पौर्णमास्यां न भवति । दर्शपूर्णमासयोरेककर्मत्वादाह । तस्मिन् प्रारब्धे दर्शे अनुष्ठिते सति यागे जीर्णारणिद्वयं मन्थनाशक्तं पूर्वारणिद्वयं शकलीकृत्य खण्डशः कृत्वा, अभूततद्भावे च्विः, पाश्चात्ये वह्नौ गार्हपत्ये निःक्षिप्य दीपयेत् ॥

ततस्तदनन्तरं दक्षिणहस्तेन नूतनामुत्तरारणिं गृहीत्वा, परिशेषादामेनाधरारणिमित्यध्याहारः । ते नूतने उभे अरणी तस्मिन्निति तत्र दीप्तेऽग्नौ धारयन् सन् जपेत् ॥

किं जपेदित्याह । उद्बुध्येति । उद्बुध्यस्वाग्न इति प्रकारेण एतद्यजुः, अयन्ते योनिरित्यपि यजुः, जपेदित्यन्वयः ॥११७॥११८॥११९॥

सर्वेषामेकरूपत्वात्मन्त्रस्वरूपमाह ।

---

* एतदर्द्धं ग० पुस्तकातिरिक्तपुस्तकेषु नास्ति । नापि टीकासम्मतम् । परन्तु सङ्गतत्वात् ग० पुस्तकानुसारेण निवेशितम् ।

उद्बुध्यस्वाग्ने प्रविशस्व योनिमन्यां देवयज्यां वोढवे जातवेदः । अरण्योररणीमनुसङ्क्रमस्व जीर्णान्तनुमजीर्णया निर्णुदस्वेति प्रथमोमन्त्रः ।

उद्बुध्यस्वाग्ने इत्यादि निर्णुदस्वेत्यन्तोमन्त्रः ।

ततः किं कुर्यादित्याह ।

मन्थनस्यावृता सम्यङ्मथित्वाऽग्निं विहृत्य च ।
विलाप्योत्पूय दर्भाभ्यां स्रुच्याऽऽदाय चतुर्घृतम् ॥१२०॥
जुहोत्याहवनीयाग्नौ मनस्वत्या घृतान्तया ।
इष्टिं तन्तुमतीं कुर्याच्छरावं दक्षिणां ददेत् ॥ १२१ ॥

मन्थनस्येति । मन्त्रजपानन्तरं मन्थनस्यावृता इतः प्रथममित्यादि मन्थनं कृत्वा ततः सम्यक् मन्थनावृताऽग्निं मथित्वा प्रकटीकृत्य, विहृत्य विहरणं कृत्वा, विलाप्याज्यस्थाल्यामाज्यनिर्वापं कृत्वा, दर्भाभ्यामुत्पूय, स्रुचि जुह्वां चतुर्वारं घृतं चतुर्घृतं आदाय, घृतान्तया घृत इति शब्दान्तया मनस्वत्या ऋचा आहवनीये अग्नौ जुहोति । शाखान्तरे अन्यथा श्रवणात् घृतान्तयेत्युक्तम् । ततस्तन्तुमतीं तत्संज्ञकामिष्टिं कुर्य्यात् । शरावं दक्षिणां दद्यात् । अन्वाहार्य्येण समुच्चित्य दद्यात् । शाखान्तरे तु केवलं शरावं दद्यात् । तल्लक्षणन्तु,

वृत्तं प्रादेशमात्रन्तु शरावं निगमोदितम्,—इति ।

तन्तु धान्यपूर्णं दद्यादित्येके ॥१२०॥१२१॥



इत्यनारोपितारण्योः क्षये नाशे नवे पुनः ।
तदलाभे यदोद्वायेत् तदा स्यात् पुनराहितिः ॥ १२२ ॥

इति अमुना प्रकारेण अनारोपितारण्योः क्षये नाशे अपहारगृहदाहादिजन्ये जन्वादिमथनाक्षमे वा, पुनः नवे नूतने ग्राह्ये स्वीकार्य्ये । यदि नूतने न लभ्येते, तदा किमित्यत आह । तदिति । तदलाभे नूतनारण्योरलाभे यदा उद्वायेदनुगच्छेत्, तदा पुनराधानं स्यात्तु पूर्व्वोक्तोविधिः । अरण्योरपहारादौ यावदग्निरक्षणं तावन्न पुनराधानम्, मथ्यएव नूतनारणिस्वीकारे नाधानम्, अकृते च तस्मिन्नग्न्युपशमे आधानमिति ॥१२२॥

प्रसङ्गादरणीनाशनिमित्तान्याह ।

शूद्रोदक्यान्त्यकाकश्वपतितामेध्यरासभैः ।
अनारूढारणिस्पर्शे ते विहायान्ययोर्ग्रहः ॥ १२३ ॥

शूद्रेति । शूद्राश्चरमवर्णाः प्रतिलोमजाश्च । उदक्या रजस्वला । अन्त्या अन्त्यजाः पूर्व्वोक्ताः । काकश्वानौ प्रसिद्धौ । पतिताः पातित्यप्रसङ्गकर्म्मकारिणः । अमेध्यं मूत्रादि । रासभश्चक्रीवान् । एतैरनारूढारणिस्पर्शे ते विहायान्ययोररण्योर्यथोक्तयोर्ग्रहः स्वीकारः पूर्व्वोक्तः कार्य्य इति ॥ १२३॥

नष्टारणिप्रतिपत्तिमाह ।

भवतन्नः समेत्यप्सु मज्जयेद् दूषितारणी ।
एकाऽरण्येव दुष्टा चेत्तामेवाप्सु निमज्जयेत् ॥ १२४ ॥

भवतं न इति । भवतं नः समनसेति मन्त्रेण अप्सु दूषिता-

रणी युगपन्मज्जयेत् । सिंहावलोकनन्यायेन पूर्व्वोक्तमेवानुवदति । एकारण्येव दुष्टा दोषयुक्ता चेत्, तामेव दुष्टामेव अप्सु निमज्जयेत्, न तु साहचर्य्यादुभे ॥१२४॥

**अथान्यारणिलाभात् प्रागुद्वाते* पुनराहितिः ।**
**काष्ठशुद्ध्या विशोध्ये वा त्यजेद्दोषेऽतिसन्तते ॥ १२५ ॥**
**अल्पदोषे शुद्धिरेव त्यजेद्दोषेऽपि नारणी† ।**

---

* तथान्यारणिलाभात् प्रागुद्वाने, – इति ग० पुस्तके पाठः ।

† एतस्मात् परं ग० पुस्तके योऽधिकः पाठोऽस्ति, स इह प्रदर्श्यते, –

उद्वाने पुनराधानं छन्दोगपरिशिष्टतः । आत्मारोपे शरीरस्थ नाशे नश्यति पावकः । शवदेहे विनष्टेऽपि दक्षिणः पाणिरस्ति चेत् । लौकाग्नौ स्थापयित्वाऽस्य पाणिं पुत्रो जपेद्यजुः । उपावरोह जातेति तूष्णीमग्निं नमेत्ततः । द्वादशोपात्तेनाज्येन तूष्णीकं जुहुयात् स्रुचा । हस्तस्थातः प्रपद्येत प्रेते मात्याऽऽहुतिक्रियाम् । सकले कुणपे नष्टे एष एव विधिर्भवेत् । समावरण्योरारूढे प्रमीयेत पतिर्यदि । प्रेतं स्पृष्ट्वा मथित्वाऽग्निं नत्वा चोपावरोहयाम् । हुतं च द्वादशोपात्तं तूष्णीं कृत्वा शवक्रियाम् । उपावरोह जातवेद इमं स्वर्गाय लोकाय नय प्रजानन् । आयुः प्रजां रयिमस्मासु धेहि प्रेताऽऽहुतीश्चास्य जुषस्व स्वाहा । इत्युपावरोहमन्त्रपाठभेदः । विच्छिन्नवह्निमुत्सृष्टपावकं विधुराग्निकम् । आहिताग्निं मृतं दग्धुं त्रेताऽग्न्युत्पत्तिसिद्धये । भरद्वाजादयः प्राहुः प्रेताधानविधिं पृथक् । प्राचीनावीतवानुद्धृत्यावोक्ष्यायतनान्यथ । प्रेतं स्थाप्याग्नये छित्त्वा मथ्नीयात् स्थापयेऽरणी । सन्निधायाग्निकं मन्थेद्यक्ष्येति यजुमाऽन्वतः । यस्यामयो जुहुतो मांसकामाः सङ्कल्पयन्ते यजमानमांसम् । जायन्तु ते हविषस्त्वद्धिताय स्वर्गं लोकमिमं प्रेतं



अथास्मिन् निमित्ते सति क्षिप्रं नूतनारणिस्वीकार उचितः । यदि विलम्बयेत्, तदा अन्यारणिलाभात् स्वीकारात् प्राक् पूर्व्वं उद्वाते अग्नौ पुनराहितिः । तदुक्तम्,

नष्टायामरणौ यावदग्निस्तिष्ठति वेश्मनि ।
तावद्धोमादिकं कृत्वा तन्नाशे पुनराहरेत् ॥

इति देवयाज्ञिकग्रन्थे । स्वसूत्रानुरोधेनैव पक्षान्तरमाह । काष्ठशुद्ध्येति । पूर्व्वपक्षनिरासार्थो वा शब्दः । वेत्यथवा, काष्ठशुद्ध्या विशोध्ये, न पुनराधानम् । काष्ठशुद्धिः स्वत्यन्तरादौ प्रसिद्धा तक्षणादिः । इयञ्च शुद्धिः स्वल्पदोषविषया । अतिसन्तते दोषे त्यजेदेव । सर्व्वं वाक्यं सावधारणमिति न्यायात् । अल्पदोषे तु शुद्धिरेव । बहुदोषे अरणी न त्यजेत्, मूले सन्तत-ग्रहणात् ॥१२५॥

क्रियालोपस्वरूपान्तरमाह ।

**प्रागादित्योदयाद्धोमं सङ्कल्प्य न जुहोति चेत् ॥ १२६ ॥**
**अग्न्याधिः पुनराधिर्वा नोभयं स्वामिसन्निधौ ।**

---

नयन्तु । इति मथनमन्त्रः । प्रणीय पावकं तूष्णीं द्वादशोपात्तसर्पिषा । तूष्णीं कृत्वा ततः कुर्य्यात् प्रेते मात्याऽऽहुतिक्रियाम् । नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् । आहरेदरणीबन्धमाधानोक्तविधानतः । तद्यथा । तद्देवाभिमन्त्र्यास्तु तन्मन्त्राभ्यां विनिक्षिपेत् । निर्मन्थ्ये पावके यद्धौपासनार्थे तदस्ति चेत् । ततोऽग्निशून्यप्रेतोक्तमथनादि प्रपद्यते । यत्तु यस्यामयो जुहुतेत्यादिमन्त्रकमीरितम् ।

अयमंशः पुस्तकान्तरेषु पूर्व्वमेव गतः ।

आदित्योदयात् प्राक् होमं सङ्कल्प्य चेत्, न, जुहोति । तदाऽऽधानमाधेयं वा भवति । स्वामिनो यजमानस्यासन्निधौ तु गौणम् । अनुदितहोमपरिग्रहं कृत्वा यदि निमित्तं विना उदिते जुहोति तदा पुनराधानं न तु सति निमित्ते । दैवात् मानुषाद्वाऽपराधादनुदितहोमिनोऽपि गौणकाले होमाम्नानात् । स्वाम्यसन्निधौ तु वचनाच्च भवति । यद्वा । निमित्तसद्भावपरतया न व्याख्येयम् । अनुदिते होमपरिग्रहिणा उदयात् पूर्वमकृते होमे पुनराधानमेव । गौणकालकथनं तु यजमानासन्निधाने । स्वामिसन्निधाविति पाठे तु, यजमानासन्निधाने न गौणकालविधानम् । किन्तु स्वामिसन्निधाने गौणकाल इत्यर्थः समायाति ॥१२६॥

क्रियालोपस्यैव सङ्ख्यान्तरमाह ।

**अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदैहिकम् ॥ १२७ ॥**
**प्रायश्चित्तमसौ स्मार्त्तं कृत्वाऽग्नीनादधीत च ।**

यष्टरि प्रवसितरि अमृतं यष्टारं मृतमाकर्ण्य पुत्रादिना यस्य यष्टुरौर्ध्वदैहिकं पर्णशरविधिना कृतम् । पश्चात् कियता कालेनागतेन यष्ट्रा किं कार्यमत आह ।

प्रायश्चित्तेति । असौ स्मार्त्तं प्रायश्चित्तं कृत्वा अग्नीन् पुनरादधीत च ॥१२७॥

बौधायनोक्तं निमित्तान्तरमाह ।

**नाशापहारावग्नीनां यद्वाऽऽरूढारण्योर्यदा ॥ १२८॥**



**तदात्मारोपमार्गेण* लौकाग्नाववरोहणम् ।**
**कुर्यान्न पुनराधानमिति बौधायनोऽब्रवीत् ॥ १२९ ॥**
**अत्यन्तसङ्कटे क्वापि पक्षोऽयमुपयोक्ष्यते ।**
**तत्रैतेषु निमित्तेषु नष्टानां पुनराहितिः ॥ १३० ॥**
**स्थितानुत्सृज्य चान्येषु पुनराधानमिष्यते ।**
**तत्रोत्सर्गनिमित्तेषु यदाऽग्नीनां विनाशनम् ॥ १३१ ॥**
**नष्टेषूत्सर्गहेतुष्वाधायोत्सृज्याहितिस्तदा ।**

अग्नीनां यद्वा आरूढारण्योः समारोपितारण्योरित्यत्रैकत्वमविवक्षितम् । नाशापहारौ यदा स्यातां, तदा आत्मारोपणप्रकारेण लौकाग्नौ अवरोहणं कुर्यात् न पुनराधानमिति बौधायनोऽब्रवीत् । अयं पक्षः अत्यन्तसङ्कटे महापदि कदाचित् उपयोगाय भवति न सर्वदा । उपसंहरति । तत्रेति । तत्र सर्वनिमित्तेषु मध्ये एतेषु पूर्वोक्तेषु निमित्तेषु सत्सु नष्टानां पुनराहितिः । अन्येषु उत्सर्गपूर्वकपुनराधाननिमित्तेषु जातेषु, स्थितान् स्वरे विद्यमानान् अग्नीनुत्सृज्य पुनराधानमिष्यते । तत्रोत्तरार्द्धस्थितमुत्सर्गनिमित्तेष्विति पदमन्येष्वित्यनेन विशेषणीयम् । तत्रेति । तत्रापि उत्सर्गहेतुषु उत्सर्गपूर्वकपुनराधेयनिमित्तेषु केषु चिज्जातेषु, नष्टेषु सत्सु अग्निष्विति शेषः । तदा आधायोत्सृज्य पुनराधेयम् । यथा, पुनराधेयमाधानाप्रतिज्ञातस्य राज्ययशस्कामस्येत्युपक्रम्य चिराच्चावरमग्नीनुत्सृज्येति उत्सर्ग आम्नातः । तत्राग्नयः स्थिताश्चेत्तदा स्थितानामेवाग्नी-

* तदात्मारोपणमार्गेण, — इति सटीकपुस्तकेषु पाठः ।

नामुत्सर्गपूर्वकमाधेयम् । यदा तु केनचिन्निमित्तेनाग्निनाशे जाते अनुत्सर्गविशिष्टाधेये आधाने वा प्रसक्ते आधानाप्रतिज्ञान इत्यादिना उत्सर्गविशिष्टाधेये च प्रसक्ते तदा नष्टानग्नीनाधेयेनाधानेन वा सम्पाद्योत्सृज्य पुनराधेयमिति भावः ॥१२८॥१२९॥१३०॥१३१॥

**तथा येषु निमित्तेषु सर्वैर्नाशोऽभिधीयते ॥ १३२ ॥**
**नष्ट एव भवेत्तत्र येषु नाशो विगीयते ।**
**तत्र किन्तु* भवेत्तावद्विकल्पो न हि सम्भवेत् ॥ १३३ ॥**

पूर्वोक्तेषु येषु निमित्तेषु सर्वैर्नाशः अभिधीयते, तत्र तस्मिन् निमित्ते नष्ट एव भवेत् । पक्षान्तरश्रवणाभावात् । येषु निमित्तेषु नाशो विगीयते परैर्निन्दितो भवति तत्र किन्तु भवेदिति प्रश्नः ।

तत्र पक्षान्तरे सत्यपि तदाश्रयणं न कार्यमित्याह तावदादौ । विकल्पो न हि सम्भवेत् । यथा

ज्येष्ठा चेत् बहुभार्यस्य ह्यतिचारेण गच्छति ।
पुनराधानमत्रैक इच्छन्ति न तु सूरयः ।

इत्यादावभिहितस्याग्निनाशस्य, न तु सूरय इत्यनेनापवादः कृतः । तत्र किमनुष्ठेयमिति विशये विकल्पेन इच्छावशाद् भवितव्यमिति । तदिच्छाविकल्पोन भवति । तस्मादृष्टदोषदूषितत्वेनानुपादेयतया व्यवस्थाविकल्पं युक्तं वक्तुम्† ॥१३२॥१३३॥

* सर्वत्रैवं पाठः । किन्न, — इति तु प्रतिभाति ।
† इत्यमेव सर्वत्र पाठः । व्यवस्थितविकल्पो युक्तो वक्तुम्, — इति तु भवितुमुचितम् ।



स यथा ।

**विनाशस्याविधेयत्वादत एवं* विवेचनम् ।**
**आदराद्रक्ष्यमाणस्य सर्वैष्टैरेव नाशनम् ॥ १३४ ॥**
**न विगीतैरुपेक्षायां विगीतैरपि नाशनम् ।**

विनाशस्येति । विनाशस्याविधेयत्वाद्विधेयभिन्नत्वादत एवं विवेचनं विवेकः कार्यः । आदरात्परमभक्त्या रक्ष्यमाणस्य पुंसः सर्वैष्टैः सर्वसम्मतैरेव पुनराधाननिमित्तैर्नाशनमग्नीनामिति शेषः । विगीतैः सापवादकैर्निमित्तैर्न । उपेक्षायान्तु विगीतैरपि सापवादकैरपि निमित्तैर्नश्यति । यथाकालक्रियं सावधानस्य परमश्रद्धावतः पुंसः सर्वसम्मतैरेव पुनराधाननिमित्तैः पुनराधानं, उपेक्षावतो ऽश्रद्धावतस्तु येन केनापि निमित्तेन पुनराधानमिति भावः ॥१३४॥

अथ यदहरेवैनं श्रद्धोपगमेदित्युदिना श्रद्धावत्त्वस्याधिकारिविशेषणत्वादसमञ्जसामसुं व्यवस्थां मन्वान आह ।

**यद्वा† ऽग्निरक्षणे मार्गो यादृशोऽङ्गीकृतः पुरा ॥ १३५ ॥**
**तदत्यये विनाशः स्यान्नान्यैः पाक्षिकहेतुभिः ।**

यद्वेति । यद्वाशब्दः पूर्वपक्षनिरासार्थः । अग्निरक्षणे मार्गः प्रकारः यादृशः पुराऽङ्गीकृतः, तदत्यये पूर्वाङ्गीकृतपक्षनाशे विनाशः स्यात् । अन्यैः पाक्षिकहेतुभिर्वैकल्पिकपक्षैर्न स्यात् । यथा नदीसीमाति-

* एव, — इति क० ख० ङ० पुस्तकेषु पाठः ।
† यदा, — इति पाठः ग० ङ० पुस्तकयोः ।

क्रमणे अग्निसंहरणार्थमग्न्यन्वारम्भे स्वीकृते कदाचित् कौगा-
क्ष्यादिमतेनाकृते पुनराधानमेव । यदा तु आदित एव कौगाक्ष्यु-
क्तप्रकारेणानुष्ठाने*ऽन्वारम्भणाभावेऽपि न क्षतिरिति ॥१२५॥

अथैतस्यापि रूपमित्यादिष्वदर्शनादपरितुष्यमाणइव व्यवस्था-
न्तरमाह ।

**यदाऽग्न्यर्जनशक्तस्य पाक्षिकैरपि नश्यति ॥ १२६ ॥**
**निमित्तैर्न दरिद्रस्य पाक्षिकैरग्निनाशनम् ।**

यदेति । यदेति पूर्वपक्षापवादार्थं वचनम् । अर्जनशक्तस्य द्रव्यार्ज-
नसमर्थस्य पाक्षिकैरपि निमित्तैर्नश्यति । सर्व्वेण निमित्तमात्रेणापि
नश्यतीति भावः । दरिद्रस्य पाक्षिकैरग्निनाशनं नेति भावः ॥
१२६॥

अथैतदपि प्रभुसंमितशब्दोपसंगृहीतानां कर्मणां दरिद्रादरिद्र-
साधारण्यात् यत्किञ्चिद्दोषदूषितत्वेनाग्नीनां तेष्वनुष्ठितकर्मणामफल-
प्रदत्वेन फल्गुतया भग्नाचिदुर्बले पुंसि काणव्यवहाराद्यापेशलं मन्वान-
आह ।

**यदाऽग्नीन् जनयेदेव निमित्तैः सर्वसम्मतैः ॥ १२७ ॥**
**पाक्षिकैर्जनने श्रेयो नैनस्तेष्वेव जुह्वतः ।**

यदेति । यदेति पूर्ववत् । सर्वेषामाचार्याणां संमतैर्निमित्तैर्निर-

* इत्थमेव पाठः सर्व्वत्र । यदा तु आदित एव कौगाक्ष्युक्तप्रकारेणा-
नुष्ठानं, तदा, — इति तु भवितुमुचितम् ।



पक्षादकैरिति यावत् । अग्नीन् जनयेदेव पुनराधानं कुर्यादेव ।
पाक्षिकैर्निमित्तैर्जनने सति श्रेयः अधिकतमफलदातारोऽग्नयोभवेयुः ।
अथ तेष्वेव जुह्वतो यष्टुरेनो दोषो [illegible] । पाक्षिकनिमित्तेन नैमि-
त्तिकेऽनुष्ठिते फलाधिक्यमिति भावः ॥१२७॥

ननु पाक्षिकानुष्ठानकथनं व्यर्थमित्यत आह ।

**अनेकाचार्यसिद्धान्ताः सौकर्याय निरूपिताः ॥ १३८ ॥**
**देशकालवयोऽवस्थाशक्तिभेदाद्व्यवस्थिताः ।**

अनेकाबहवोये आचार्याः कल्पकृतस्तेषां सिद्धान्ताः, न तु पूर्व-
पक्षाः । तेषामनुष्ठानानर्हत्वात् सिद्धान्तग्रहणम् । सौकर्याय सुखेन
स्वकर्माचरणाय निरूपिता उक्ताः । ननु तर्हि स्वेच्छाविकल्पाः स्युः,
इत्यत आह देशेति । देशकालवयोऽवस्थाशक्तिभेदात् व्यस्थिताः
व्यवस्थां प्राप्ताः । तथा च नैतेषां खलीकपोतन्यायेन प्रवृत्तिः । किं
तु अधिकारिणमालोच्यैवेति । यथा एकाकिनी पत्नी अग्निभिः
सह न यायादित्येकाचार्यसिद्धान्तः । देशोपप्लवे तु तादृशं यान-
मदुष्टमित्यपराचार्य्यसिद्धान्तः । अत्र देशकृता व्यवस्था । कालपरत्वेन
व्यवस्था, काम्याल्पत्वे निर्मथ्यत्यादिष्विव बोध्या ॥१२८॥

पुनरुपसंहरति ।

**पुनराधिप्रसङ्गेन किञ्चिदत्र निरूपितम् ॥ १४० ॥**
**प्रायश्चित्तान्तरं वक्ष्ये स्वस्थाने बहुविस्तरम् ॥ १४१ ॥**

पुनरिति । पुनराधिः पुनराधानं, तत्प्रसङ्गेन प्रसङ्गसङ्गत्या

अस्मिन् पुनराधाननिमित्तनिर्णयाधिकारे किञ्चित्प्रायश्चित्तं समिन्धनादिरूपं निरूपितम् । एतेनान्यप्रायश्चित्ताकथनान्न्यूनत्वं नाशङ्कनीयम् । स्वस्थाने प्रायश्चित्तनिर्णयाधिकारे बहुविस्तरो विस्तारो यस्य एवम्भूतं प्रायश्चित्तान्तरं प्रणीतास्कन्दनादि वक्ष्ये वदिष्यामि ॥

## इति श्रीवादिभटमुद्गरकुठार श्रीकुमारस्वामिसूरिसुत-त्रिकाण्डमण्डनभास्करमिश्रसोमयाजिकृतापस्तम्ब-सूत्रध्वनितार्थकारिकासु पुनराधेयनिमित्त-निर्णयो नाम तृतीयकाण्डम् ॥

इतीत्यादि पूर्ववद्व्याख्येयम् ॥

इति त्रिकाण्डमण्डनविवरणे पुनराधेयनिर्णयं नाम तृतीयं काण्डम् ॥

---



# प्रकीर्णककाण्डम् ।

गौरीप्रद्विरिजाजानिं गिरिजामातरं परम् ।
यत्प्रसादाद्द्रजोजालजन्तैर्विघ्नैः पलायते ॥

अथोक्तानामेव सर्वधर्माणां प्रायश आवसथ्येऽग्नौ सम्भवात्किञ्चिदवशिष्टं केवलावसथ्यविषयकमेव वक्तुमुपक्रमते ।

**सकृत् करणमिच्छन्ति पाकयज्ञेषु केचन ।**
**आवृत्तिं केचिदिच्छन्ति तत्रावृत्तिस्तु सम्मता ॥ १ ॥**

सकृदिति । पाकयज्ञेषु पाकसंस्थासु केचन सकृत् करणमिच्छन्ति । केचिदावृत्तिमिच्छन्ति । स्वमतमाह । तत्रोभयपक्षमध्ये आवृत्तिः सम्मता ॥१॥

तत्र हेतुमाह ।

**यस्मात् विधिविशेषेण फलमप्यतिरिच्यते ।**
**अष्टकानान्तु नावृत्तिः संस्कारः स हि निश्चितम् ॥ २ ॥**

यस्मादिति । यस्मात् कारणाद्विधिविशेषेण, विध्यते अनेनेति विधिः लिङादिस्तद्विशेषेण विशेषानुष्ठानेन फलमप्यतिरिच्यते अधिकं भवति । यथा, आधानं प्रकृत्य शाखान्तरेऽभिहितं, षट् दक्षिणा प्रतिविभज्य ददाति द्वादश चतुर्विंशतिर्वा भूयसीश्च यथाश्रद्धमित्यादिषु दक्षिणादिविकल्पे विधिविशेषस्य चतुर्विंशतिगोदानपक्षस्य दानेऽतिरिक्तं फलं, तदेवाप्नोतीति भावः । एककर्मणि गुणविशेषे फलविशेष इति कात्यायनाचार्योक्तेः । प्रकृतेऽपि सकृत्-

पश्चात् विधिविशेषरूपेऽसकृदनुष्ठाने कृते फलातिशय इति न दृष्टान्तदार्ष्टान्तयोर्वैयधिकरण्यम् । पाकसंस्थास्तु चतुर्विधाहुतादिभेदात् । तदुक्तं पारस्कराचार्यैः । चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति । एतल्लक्षणानि च विस्तरभीत्या नोच्यन्त इति सङ्क्षेपः ।

अष्टकानामप्यावृत्तौ प्राप्तायामाह ।

अष्टकानामिति । अष्टकानान्तु एतत्संज्ञकानां कर्मणां नावृत्तिः ।

हेतुमाह ।

हि यस्मात् कारणात् स अष्टकारूपकर्मविशेषो निश्चितं सर्वसम्मतं संस्कारः । आत्मसंस्कार इत्यर्थः । एकदा संस्कृतः पुरुषः सर्वोपयोगाय भवतीत्युक्तत्वात् । यथोपनयनादेः * आत्मसंस्काराणाम् । पार्वणादीनां तु नित्यत्वश्रवणादावृत्तिः ॥२॥

सकृत्करणेऽपि अधिकारिणमाह ।

**अन्वष्टक्यं भवेत्कर्म यदि माता न जीवति ।**
**जीवत्पितृकविप्रस्य पिण्डयज्ञो भवेन्न वा ॥ ३ ॥**

यदीति । यदि माता न जीवति तदैव भवतीत्यर्थः ।

प्रसङ्गादाह ।

जीवत्पितृकस्य तु पिण्डयज्ञो भवेन्न वा भवेत् । उभयथाप्याम्नातत्वात् । तथाहि सूत्रम् । होमान्तमनारभ्यो वेति ॥३॥

---

* इत्थमेव पाठः सर्वत्र । उपनयनादीनां, — इति तु भवितुमुचितम् ।



एवमाभ्युदयिकेऽपि विकल्पः स्यादत आह ।

**पित्रोस्तु जीवतोः कुर्यात् पुनः पाणिग्रहं तदा ।**
**पितुर्नान्दीमुखं श्राद्धं न तु स्वस्य मनीषिभिः ॥ ४ ॥**

पित्रोरिति । पित्रोर्जीवतोः पाणिग्रहं यदा कुर्यात् तदा स्वस्य पितुर्नान्दीमुखं नान्दीमुखदेवताकं पुनः श्राद्धं कुर्यान्न तु स्वस्य । इति मनीषिभिः प्रोक्तमिति शेषः ।

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः ।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकमिति वचनात् ।

पाणिग्रहपदमात्मसंस्कारोपलक्षणम् । जीवत्पितुः सुतसंस्कारेषु तत्तद्वर्गपरित्यागेनोचितत्वाभिधानात् । जीवद्वर्गत्रयस्य तु लोपस्यैवाभिहितत्वाच्च । अत्र बहु वक्तव्यमस्ति, विस्तरभियोपरम्यते ॥४॥

शाखान्तरविषयमाह ।

**नोद्धरेदावसथ्याग्निमेकाग्नित्वादनाहितः ।**
**वैश्वदेवादिकं कर्म तस्मात्तत्स्थे हविर्भुजि ॥ ५ ॥**
**उद्धृतो भूरिपाकार्थं यदि किञ्चित् तनूनपात् ।**
**पूर्वेण योजयित्वा तु वैश्वदेवो विधीयते ॥ ६ ॥**

अनाहितः साग्निकः एकाग्नित्वादावसथ्याग्निं पाकार्थं नोद्धरेत् । यत एक एवास्यास्ति । आहिताग्निस्तु पाकाद्यर्थं उद्धरणं कुर्यादेव । यदि नोद्धरेत्तदा लौकिकाग्निसिद्धपाकेनैव तत्स्थे हविर्भुजि स्वरस्याग्नौ, वैश्वदेवादिकं कर्म कार्यम् । आदिपदादग्नौकरणादिक-

मपि। यदि चोद्धरेत्तदा भूरिपाकार्थं यदि किञ्चिदेकदेशेन तनून-पादुद्धृतस्तदोद्धृतैकदेशाङ्गारस्थाग्निना योजयित्वा वैश्वदेवः कार्य इति ॥५॥६॥

स्मार्तानुगमे स्थापनप्रकारमाह ।

**प्रमादादग्निनाशश्चेत् मन्थनादरणेस्ततः ।**
**पञ्चभूसंस्कृतिं कृत्वा स्थापयेदग्निमेधितम् ॥ ७ ॥**

प्रमादेति । प्रमादादग्निनाशश्चेत्, ततोऽरणेर्मन्थनादेधितं समृद्धमग्निं पञ्चभूसंस्कृतिं परिसमूहनादिकां कृत्वा खरे स्थापयेत्। नात्र प्रायश्चित्तमिति ॥७॥

प्रमादान्नित्याकरणे विशेषमाह ।

**कालातिक्रमणे कृत्वा प्रायश्चित्तं विधानतः ।**
**ततो होमादिकं कर्म कुर्यान्नित्यं विचक्षणः ॥ ८ ॥**

कालेति। कालातिक्रमणे मुख्यकालातिक्रमणे विधानतः यथाविध्युक्तं प्रायश्चित्तं कृत्वा होमादिकं नित्यं कर्म गौणकालेऽपि कुर्यात् । तदुत्तरं प्रायश्चित्तमात्रं न कर्म । वैश्वदेवस्य तु रात्रेः प्रथमयामपर्यन्तं गौण एव ।

दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ।
रात्रेः प्रहरपर्यन्तं कर्तव्यान्येव सर्वथा ।
ब्रह्मयज्ञञ्च सौरञ्च वर्जयित्वाविशेषत इत्युक्तेः ॥८॥

एवञ्च सति सायं होमात् प्रागेव भवति, तदनन्तरमित्याह।



**अकृते वैश्वदेवे चेदस्तमेति गभस्तिमान् ।**
**वैश्वदेवं ततः कृत्वा सायं होमं समाचरेत् ॥ ९ ॥**

अकृतेति । स्पष्टार्थम् ॥९॥

एवमेव सर्वत्र साधारणन्यायमाह ।

**कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च ।**
**कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ॥१०॥**

कालातीतेष्विति । कालातीतं कर्म कृत्वोत्तरं कार्यम् । न तु मुख्यकाललोभेन कालातीतात् प्रागनुष्ठानम् । तत्र प्रायश्चित्तमकृत्वा कृत्वा वा कार्यमित्यन्यत्र विस्तरः ॥१०॥

प्रायश्चित्तं कृत्वैव कार्यमित्येवं पक्षोज्यायान्, अत आह ।

**पक्षादिः पिण्डयज्ञश्च प्रमादादकृतं यदि ।**
**प्रायश्चित्तं ततो हुत्वा कर्तव्यं तद्दिनान्तरे ॥ ११ ॥**

पक्षादिरिति। पक्षादिः स्थालीपाकः, पिण्डयज्ञश्च, यदि प्रमादादकृतः, तदा प्रायश्चित्तं ततोऽकृत्वा तत्पक्षादिकर्म दिनान्तरे कर्तव्यम् । आगामिपक्षादिकर्मणः प्राक् । प्रायश्चित्तस्य नानात्वाशोक्तम् । तच्च गौणकाले पथिकृत्पूर्वकं भवतीति केचित्, परे तु गौणातिक्रमे दार्शपौर्णमासिकोभयपक्षादिकर्मलोपे तत्स्थाने पथिकृदित्यन्यत्र विस्तरः । पिण्डयज्ञस्य गौणकालो नास्तीति भाष्यकृतः। तल्लोपे वैश्वानरचरुरेव भवति। रामाण्डारभाष्ये तु स्वकालादुत्तरो गौण इति वचनादागामिदर्शेऽनुष्ठानं प्रायश्चित्तपूर्वकं पिण्डयज्ञस्येत्युक्तम् ॥११॥

सर्वथैव नित्यकर्मलोपो न कार्य इत्याशयेनाह ।

लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विनिर्द्दिशेत् ।
प्रायश्चित्ते कृते पश्चात् नित्यं कर्म विधीयते ॥ १२ ॥

लुप्तेति । स्पष्टार्थम् ॥ १२ ॥

श्रौतारणिवत् स्मार्तारण्योः श्वादीनां स्पर्शे त्यागः पूर्ववद्भवतीत्यनुवदति ।

श्वशूद्रपतितोदक्याकाकवानररासभैः ।
स्पृष्टा मूत्रपुरीषेण नाशमेत्यरणिः स्फुटम् ॥ १३ ॥

श्वशूद्रेति । व्याख्यातपूर्वम् ॥ १३ ॥

अरणीनाशोत्तरं नूतनारणिस्वीकारोऽविशेषेण विधेयः । अन्यथा अभ्युपगमे पुनराधानं प्रसज्येत । अत आह ।

नष्टायामरणौ यावदग्निस्तिष्ठति वेश्मनि ।
तावद्धोमादि तत्र स्यात्तन्नाशे पुनराहरेत् ॥१४॥

नष्टायामिति । जीर्णारणिप्रतिपत्तिस्तु पूर्वोक्ता ॥ १४ ॥

जीवत्पत्नीकस्य द्वितीयविवाहादौ वैवाहिकहोमाधिकरणाग्निमाह ।

भार्यायां विद्यमानायां द्वितीयामुद्वहेद् यदि ।
तदा वैवाहिकं कर्म कुर्यादावसथेऽग्निमान् ॥ १५ ॥

भार्यायामिति ॥ १५ ॥



अपूर्वाधानप्रथममन्थनेऽरणिस्वरूपमाह ।

उत्ताना प्राक्शिरा वेदिर्यथा वेदिस्तथाऽरणिः ।
अध्वर्युः प्राङ्मुखोमन्थेत् प्रत्यक् सुचरणा हि सा ॥१६॥

उत्तानेति । यथा वेदिस्तथारणिरिति वक्तव्यत्वे प्रथमं वेदिस्वरूपमाह ।

उत्ताना प्राक्शिरा वेदिः । तद्वदरणिस्वरूपं ध्येयम् । अध्वर्युः प्राङ्मुखोमन्थेत् । हि यस्मात् सा ऽरणिः प्रत्यक् सुचरणा अस्ति ॥ १६ ॥

प्राङ्मुखेनैव मन्थनं कार्यमिति निरुक्तमन्तराण्याह ।

प्राङ्मुखोवितततो यज्ञः प्राङ्मुखेनैव हूयते ।
प्राक् प्रणीतादिपात्राणि पश्चादग्निस्तु मथ्यते ॥ १७ ॥
हव्यवाड्वरुणं दृष्ट्वा भीतः प्रत्यगुदद्रवत् ।
तमिच्छेत् पुनराधातुं तस्मात् प्रत्यङ् मथीत वै ॥ १८ ॥
अनुलोमा भवेद्योनेः पार्श्वभेदेन भिद्यते ।
अनुलोमेन मथितः सर्वान् कामान् प्रयच्छति ॥ १९ ॥

प्राङ्मुख इति । यज्ञः प्राङ्मुखः विततः । तथाविधेनैव हूयते । प्रणीतादिपात्राणि प्राक् प्राक्संस्थानि । तस्मादग्निः पश्चात् मथ्यते । तथा च सति मन्थनमपि प्राङ्मुखेनैव भवतीत्यभिप्रायः । हव्यवाट् प्रत्यक् वरुणं दृष्ट्वा भीतः सन् उदद्रुवत् पलायते, तं पलायमानमग्निं पुनराधातुं निश्चलीकर्तुं इच्छेत् । तस्मात् प्रत्यङ् पश्चात्

स्थित्वा मथीत । वै इति निश्चयेन । अग्निवरुणयोर्मध्ये जवनिकारूपोऽध्वर्युर्भवतीति भावः ।

किञ्च । यः प्राङ्मुखोमन्थेत्स योनेरनुलोमा भवति । पार्श्वभेदेन भिद्यतेऽरणिरिति शेषः । अनुलोममन्थने फलमाह ।

अनुलोमेनेति । स्पष्टम् ॥१७॥१८॥१९॥

योनिस्वरूपमाह ।

मूलादष्टाङ्गुलान् त्यक्त्वा अग्राच्च द्वादशाङ्गुलम् ।

मूलेति ।

अग्निविच्छेदे प्रायश्चित्तमाह ।

अग्निहोत्र्युपविध्याग्नीन् ब्राह्मणः कामकारितः ॥ २० ॥
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् * ।

अग्निहोत्रीति । आहिताग्निर्ब्राह्मणः कामकारितो न तु निमित्तेन । अग्नीनुपविध्य विच्छिन्नान् कृत्वा, मासे अतीते चान्द्रायणञ्चरेत् । हेतुः । हि यस्मात्तद्वीरहत्यासमं प्रोक्तम् । एतेनेच्छयाऽग्नित्यागे यावन्तोमासा अतीतास्तावन्ति चान्द्रायणानि कुर्यादित्युक्तं भवति । ततश्च सायं प्रातश्च दिवसगणनया यावतीराहुतीः परिसङ्ख्याय तावत्पर्याप्तं धान्यं धनमन्यद्वा घृतादि द्विजातिभ्यो दद्यात् । अत्र द्विजातिपदेन ब्राह्मणा एवोच्यन्ते । त्रैवर्णिकग्रहणे वाक्यभेदापत्तेः । एवं यावन्त्यब्दान्यतीतानीत्युक्तं कृच्छ्रं प्रायश्चित्तमपि चाचरेत् ॥२०॥

* अत्र क्रियानपि ग्रन्थस्त्रुटित इति टीकापर्य्यालोचनया सम्भाव्यते ।



स्वलिङ्गात्मा धनं जाया शुद्धं यस्य चतुष्टयमित्याद्युक्तस्यार्थशौचस्य प्राशस्त्यमाह ।

सर्वेषामपि शौचानामर्थशौचं परं स्मृतम् ॥ २१ ॥

सर्वेषामिति । स्पष्टार्थम् ॥२१॥

यष्टरि प्रवसिते गृहे स्वलिङ्गादिना होतव्यमित्याह ।

अग्निहोत्रं हुतं स्वामी प्रोषितो मन्यते यदा ॥
अपोऽश्नीयादिति कठैर्होमः स्पष्टमनूदितः ॥ २२ ॥

अग्निहोत्रमिति । प्रोषितोयष्टा अग्निहोत्रकाले सायंप्रातः अग्निहोत्रं हुतं यदा मन्यते, तदा ऽपोऽश्नीयात्, न तु तदानीमेव । कुतः । सर्वथैव नाप्युदकवर्जनमाम्नातमस्ति । तन्निरुक्तिः श्रुतावभिहिता । एषा वै नौ स्वर्ग्येति । कठैः कठशाखिभिर्होमः स्पष्टमनूदितः प्रोक्तः ॥२२॥

पञ्चहोमे कृते गृहे सता प्रवसता वा द्रव्यत्यागः कार्य एवेत्याह ।

सर्वेषु पञ्चहोमेषु द्रव्यत्यागोऽस्ति सर्वदा ॥
कर्मान्यदस्तु वा मा भू ज्जपोवा स्यान्न सोऽस्ति वा ॥ २३ ॥

सर्वेष्विति । सर्वेषु पञ्चहोमेषु सर्वदा द्रव्यत्यागं कुर्यात् अन्यत् कर्म मन्त्रग्रहणादि अस्तु वा मा भूज्जपः उपस्थानादिः स्यात् । सोऽपि वा नास्ति ॥२३॥

हेतुमाह ।

त्यागाभावाद्धुतं न स्यात् समन्त्रमपि केवलम् ।
अतोहोमानुवादेन त्यागोऽस्त्येवेति कल्प्यते ॥ २४ ॥

त्यागेति । केवलं त्यागहीनं प्रक्षिप्तमपि हुतं न स्यात् । अतो होमानुवादेन कठाद्युक्तेन सर्वदा त्यागोऽस्त्येवेति कल्प्यते । असन्निधौ पत्न्यप्यधिकारिणी ।

असन्निधौ तु पत्नी स्यादुद्देश्यत्यागकारिका ।

इत्युक्तेः । प्रमवादिषु अध्वर्युरपि ॥२४॥

आढ्यत्वस्य अधिकारितावच्छेदकत्वमित्याह ।

**पुण्यान्यन्यानि कुर्वीत* श्रद्दधानो जितेन्द्रियः ।**
**न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन ॥ २५ ॥**

पुण्यानीति । श्रद्दधानः यज्ञादिषु श्रद्धावानपि जितेन्द्रियः शुद्धात्मा अन्यानि पुण्यानि तीर्थसेवनादिरूपाणि कुरुते कुर्यात् । लिङर्थे लट् । कुर्वीतेति वा पाठः । परन्तु इह अल्पदक्षिणैर्यज्ञैः कदाचिदपि न यजेत ॥२५॥

हेतुमाह ।

**इन्द्रियाणि यशः कीर्त्तिमायुः स्वर्गं प्रजां पशून् ।**
**हन्त्यल्पदक्षिणो यज्ञो तस्मान्नाल्पधनोयजेत् ॥ २६ ॥**

इन्द्रियाणीति । इन्द्रियाणि यशः स्वर्गं आयुः कीर्त्तिं प्रजां पशून् अल्पदक्षिणो ऽयथोक्तदक्षिणो यज्ञोहन्ति। तस्मादाढ्यएवाधिकारीति । दानादिजन्यं यशः । त्यागादिजन्या कीर्त्तिः ।

अर्थहीनोदहेद्राष्ट्रं मन्त्रहीनस्तथर्त्विजम् ।
आत्मानं दक्षिणाहीनोनास्ति यज्ञसमोरिपुरिति ॥

* कुरुते,—इति टीकासम्मतः पाठः ।



मात्स्ये दोषस्मरणाच्च । इदञ्च काम्ययज्ञविषयम् ।

यस्य नित्यानि लुप्तानि तथैवागन्तुकानि च ।
विपद्यपि न स स्वर्गं गच्छेत्तु पतितो हि स इति ॥
तस्मात् कन्दैः फलैर्मूलैर्मधुनाऽऽज्यरसेन वा ।
नित्यं नित्यानि कुर्वीत न तु नित्यानि लोपयेदिति च।

बौधायनवचोभ्यां विज्ञायते। श्रूयते च। यदि ब्रीहीन विन्देरन् केन जुहुयादित्यादि । ब्राह्मणस्य प्रतिग्रहादिना राजन्यस्य जयादिनेत्याद्युपायेनार्जितधनेनाढ्यत्वमपि काम्यपरमेव ।

अग्न्योरग्न्योगजोयाज्ञ्योयाज्ञ्या चोभयतोमुखी ।
कुरुक्षेत्रे प्रगृह्यापि यजेतावश्यकैर्मखैः ॥

इत्यादिस्मरणात् । नित्येषु यथाशक्तिन्यायस्य काम्येषु सर्वाङ्गोपसंहारन्यायस्य च षष्ठाध्याये जागरूकत्वाच्चेति दिक् ॥२६॥

धनाद्यर्जनमन्तरा प्रवासो न कार्य इत्याह ।

**सर्वाणि तीर्थानि वसन्ति येषां**
**सर्वे च देवायजतेऽग्निहोत्रे ।**
**उल्लङ्घ्य तानेकनिषेवणार्थं**
**व्यर्थं प्रयाणं दुरितञ्च यातुः ॥ २७ ॥**

सर्वेति । यतः सर्वाणि तीर्थाणि येषां वसन्ति, सर्वे च देवाविष्णाद्योऽग्निहोत्रे यजते इज्यन्ते । छान्दसं साधुत्वम् । तथाच आग्नावैष्णवपुरोडाशस्ताविका श्रुतिः । अग्निर्देवानामवमोविष्णुः परम इत्यादिः । अतस्तान् तीर्थानि देवांश्च उल्लङ्घ्य एकनिषेवणार्थं

एकस्य तीर्थस्य देवस्य वा निषेवणार्थं प्रयाणं प्रवासोऽथर्थम् । तत्तीर्थफलभाक् न भवतीत्यर्थः । न केवलं व्यर्थमपि तु यातुर्दुरितञ्चेति ॥२७॥

एतादृशमतिविशिष्टमग्निसेवनमिति ध्वनयितुमेतदुक्तम् ।

**ब्रह्मव्याकरणं कृत्वा हुत्वा वै पावके हविः ।**
**शालग्रामशिलां स्पृष्ट्वा शूद्रो गच्छत्यधोगतिम् ॥ २८ ॥**

ब्रह्मेति । ब्रह्मवेदः, व्याकरणमुच्चारणङ्कृत्वा । तथा, पावके हविर्हुत्वा । शालग्रामशिलां स्पृष्ट्वा । शूद्रोऽधोगतिं गच्छति । तस्मादेतत्त्रये द्विजातिरेवाधिकारीति भावः ॥२८॥

इमे पञ्च आदौ प्रथमारम्भे ये पञ्चाविष्टतास्ते सर्वदा यावज्जीवं स्वस्वकाले अनुष्ठेयाः । तानेवाह ।

**रूपं कालोऽनुनिर्वापो देवता अपणं तथा ।**
**आदौ ये विष्टताः पश्चात्त इमे सर्वदा स्मृताः ॥ २९ ॥**

रूपमिति । एतेषामुदाहरणानि देवयाज्ञिकादिभिर्भाष्यादिषु लिखितानि । तान्येवोच्यन्ते । रूपम्, दाचायणदर्शपूर्णमासस्वरूपादि । काल उदितानुदितादिः । अनुनिर्वापः, वैमृधादित्येष्यादिः । देवता, इन्द्रमहेन्द्रादिः । अपणं, गार्हपत्ये आहवनीये वा । अत्र सर्वत्रादिपदेनातिसदृशमेवोपादेयम् । अन्यथा कालशब्देन सद्यस्कालपञ्चाहिकैकाहिकादिनक्षत्रादीनामपि नियमः प्रपद्येत । एवं, रूपमित्यनेन सुसदृशं तत्कार्यकारि ग्राह्यम् । तच्च पूर्वोक्तम् । केचिद्रूपोदाहरणं द्यावापृथिवीयस्यैककपालमाज्यमित्याहुः । तच्चि-



न्त्यम् । कालादिसम्पत्तौ कृतप्रायश्चित्तेष्टेस्तदभावे पूर्णाहुत्यसम्भवापातात् । न चेष्टापत्तिः । व्यवस्थाशास्त्रमसमञ्जसं स्यात् । किञ्च, तत्रापि गव्यत्वादिकमपि परिगृहीतं सुदुस्त्यजं स्यात् । समिद्द्रव्यादिष्वपि पर्णमयत्वादीनां पूर्वपरिग्रहापत्तेश्च । तथाच सर्वमशक्यारम्भणीयञ्च स्यात् । देवतायाः पुनर्विधानाच्च । न्यायस्य त्वगतिकगतिकत्वात् सर्वेभ्य इत्यचैव दध्ना तण्डुलैरक्षतैर्वेत्यादिपारस्करगृह्योक्तहोमद्रव्येषु गोभिलोक्तेषु च परिगृहीतत्वाभेऽपि कादाचित्कत्वं व्याहन्येत । न च सिद्धमिष्टम् ।

सायंहोमेषु यद्द्रव्यं प्रातर्होमेषु तद्भवेदिति ।

यज्ञपार्श्वीयमण्डनादिधृतवचनानर्थक्यापाताच्चेति दिक् । अन्येतु रूपमित्यनेन क्रियारूपम्, अग्निष्ट इत्यङ्गिरभिमृशति सकृच्चिर्वेत्यादि । कालरूपम्, उदितानुदितहोमिनोरपि अपूर्वचणरूपम् । मन्त्ररूपम्, प्रत्युष्टमित्यादि । देशरूपम्, प्राक्संस्थमुदकसंस्थादि । द्रव्यरूपम्, आज्यपुरोडाशादि । बर्हीरूपं, कुशकाशादि । समिद्रूपम्, पलाशोदुम्बरादि । एवमन्यत्सर्वमाचमने प्राङ्मुखोदङ्मुखत्वादिकं वदन्ति । ते परास्ताः । कालादीनां पृथगुपदेशवैयर्थ्यात् । अशक्यानुष्ठानप्रसङ्गाच्च ।

पूर्ववैव योनिः पूर्वावृत् पुनराधानकर्मणि ।

इत्यादि वचनवैयर्थ्याच्चेति सङ्क्षेपः ॥

इति त्रिकाण्डमण्डनविवरणे प्रकीर्णकनिरूपणम् ॥

---

नो दृष्टं न च वा श्रुतं न कथितं केश्चित् कदाचित् क्वचि-
न्नो भूतं न भविष्यतीत्युपकृतेनान्यत् परम्भावुकम् ।
अत्रामी मदनानलस्य विधुराः श्रीकण्ठवैकुण्ठकाः
सूर्याचन्द्रमसौ दधीचिविटपाम्भोजाश्च ते साक्षिणः ॥

---